वक्तव्यम् । तच्च वाक्यं ब्रह्मविषयकवेदनवान्मर्वोत्कृष्टं प्राप्नोतीत्यर्थकमिति तस्य तात्त्विककर्मकर्त्रादिभेदपरत्वं दुरपलपम् । ततश्च तदुत्तरसंदर्भस्यापि जीवपरतात्त्विकभेदाचेतनप्रपञ्च सत्यत्वाद्युपजीव्यर्थपरत्वमेव वक्तव्यम् । नचात्र प्रकरणेऽज्ञानं, ब्रह्मणि तत्कृतप्रपञ्चारोपः, आत्मनोऽन्नमयादितादात्म्य भ्रमोऽधिष्ठानज्ञानेनतद्बाधः, प्रपञ्चस्यमिथ्यात्वं. ब्रह्मणो निर्विशेषत्व मात्मै कत्वं, ब्रह्मण एव जीवभाव इत्यादयो भवत्कल्पनागोचरा अर्थाः प्रतिपादिता उपलभ्यन्ते, यद्बलेन सूत्रस्थानीयस्य वाक्यस्य लक्षणादिनार्थान्तरपरत्वं शंक्ये तापि । अतएव सूत्रवृत्तिग्रन्थयोर्बहुविधभेदोपजीवनेनैव प्रवृत्तिः । तस्मात्प्र करणाविरोध इति । एतेन तद्भावापत्तेर्विवक्षिततत्वेन संक्रमिता पर इत्यपास्तम्। अतस्संक्रमणकर्ता स्वतो ब्रह्मभिन्नो जीव एवेत्येव युक्तम् । यत्त तद्विवक्षां निरालम्बनां सिद्धवत्कृत्य तन्मूलं च वेदितुःपरभावं, तस्य तद्भावापत्त्युपपत्ति वर्णनं ; तदपि न रुचिरम् । आत्मनोऽविद्यासंबन्धे तत्कृतान्नमयादितादा त्म्यविभ्रमे च प्रमाणाभावस्योक्तत्वेन तदपोहार्थत्वोक्तेरयोगात् । यातु फलवा क्यस्याविद्याध्यारोपिताब्रह्मत्वव्यावृत्तिरूप ब्रह्मप्राप्तितात्पर्यकत्वे ज्ञानमात्रोप देशस्य हेतुत्वोक्तिः साऽपि न युक्तिमती । असकृदावृत्तवेदनात्मकोपासनस्य संसारहेतुकर्मनिवृत्तिद्वारा स्वाभाविकस्वरूपाविर्भावात्मकमोक्षहेतुतायाश्शास्त्र सिद्धत्वेन ज्ञानमात्रस्य हेतुत्वग्राहकानन्यथासिद्ध प्रमाणलेशाभावेन च वाक्य स्य तत्तात्पर्यकत्वकल्पनासंगतेः । एतेन कर्मादिसापेक्ष ज्ञानाभ्याससाध्यत्वे मोक्षस्यानित्यत्वमित्यपि दत्तोत्तरम् । मोक्षस्य साध्यत्वानभ्युपगमात् । प्रति बन्धककर्मनिवृत्तिर्हि ज्ञानेन साध्यते । "यथा न क्रियते ज्योत्स्ना मलप्र क्षाळमान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्संभवः कुत" इत्यादि

शास्त्रात्। सापि निवृत्तिर्ननिवर्तते; प्रध्वंसरूपत्वात्। 'नपुनर्मृत्यवे 'नचपुनरावर्तते इत्यादिशास्त्रविरोधे युक्तेर्जीवनासंभवाच्च। मोक्षप्रकरणे तत्साधनतयोपदिष्टं ज्ञानमसकृदावृत्तस्मृतिसंततिरूपमिति, आप्रयाणादनुवर्तनीयमिति च सूत्रकृतैव सुस्पष्टमुक्तम्, 'आवृत्तिरसकृदुपदेशात् आप्रयाणात्तत्रापि हि दृष्टमिति। नहि भवदभिमताब्रह्मत्वव्यावृत्तिरूपब्रह्मप्राप्तेर्ज्ञानावृत्त्यपेक्षा। भ्रमस्थले तदपेक्षाऽदर्शनात्। तयोस्सूत्रयोरन्यार्थकत्वं तु परिच्छेदान्तरे निरसिष्यते। यस्तावत्प्रकरणस्योक्तार्थत्वानंगीकारे श्रुतिविरोध उक्त स्सोप्यसंभवी। नहि तत्र श्रुतौ जले आकाशप्रतिबिंबवत् तत्र सूर्यप्रतिबिंबवच्च परमात्मनोन्तःकरणे प्रतिबिंब एव प्रवेशइत्यर्थवर्णनानुगुणं प्रमाणमस्ति। प्रविशतिश्च न प्रतिबिंबने स्वरसः। आत्मैकत्वपरत्वं तु प्रकरणस्योपक्रमविरुद्धमित्यवोचाम। ननु 'दृश्यते जलचन्द्रवत् जलाधारेष्विवांशुमान्' इत्यादिकमेव प्रवेशस्य प्रतिबिंबरूपत्वे प्रमाणमितिचेन्न। तस्यतत्तात्पर्यकताया 'उभयसामञ्जस्यादेव' मितिं सूत्रकृतैव निरसिष्यमाणत्वात्। अमूर्तस्य विभोरचाक्षुषस्य ब्रह्मणः प्रतिबिंबश्च न संभवति। नचाकाशस्य दृष्टान्तत्वं, तदसिद्धेः। उपरि परिसृत्वरपयोधरपटलादिमात्रस्य तत्र प्रतिबिंबभावात्। एवमानन्दमयोविशिष्टः, विशेष्यंब्रह्म, विशिष्टंविशेष्यानुमापकमित्यप्यप्रमाणमसंगतम्। आनन्दमयो हि जीवो ब्रह्मप्रतिबिंबस्सकथं विशिष्ट इति। अपिच विवेचनीयं कोविशेषणांशः कश्चविशेष्यांश इति। ब्रह्म विशेषण मानन्दमयोविशेष्यमिति चेन्न; आनन्दमयस्य विशिष्टत्वोक्तिविरोधात्। न हि व्यक्तिमात्रं विशिष्टं भवति। ब्रह्मणो विशेष्यत्वोक्तिविरोधाच्च। ब्रह्मविशेष्य मानन्दमयोविशेषणमित्यपि न। आनन्दमयस्य विशिष्टत्वोक्तिविरोधादेव। नहि जातिमात्रं विशिष्टं भवति।

अथोच्येत - विशिष्टस्य प्रत्येकानात्मकत्वेपि एकस्यान्यसंबन्धमात्राभिप्रायेण विशिष्टत्वोक्तिरिति। न। प्रकृते ब्रह्मणोविशेष्यत्वोक्त्याऽऽनन्दमयस्य विशेषणतायाः फलितत्वेनाप्रधानस्य तस्य प्रधानविशिष्टत्वोक्त्यनुपपत्तेः। विशिष्टम् घटत्वमितिव्यवहारादर्शनात्। किंचानन्दमयस्यलिङ्गत्वमनुपपन्नम्। असत्यत्वात्। न हि शुक्तिरजतं ज्ञायमानं पृथक्शुक्तिस्वरूपं ज्ञापयति। नच तस्य सत्यत्वं सर्वात्मना भवदिष्टं; तथासति तस्य ब्रह्मत्वनिराकरणप्रयासवैफल्यात्। असत्यत्वेच तस्य वैशिष्ट्यमपि दुरुपपादम्, सत्यासत्ययोस्तदनुपपत्तेः। अपिच 'बुद्धिगुहायामेव ब्रह्मण उपलब्धिसंभवो नान्यत्रेति भवदुक्ततया विशिष्टेन लिंगेन विशेष्याधिगमाय बुद्धिगुहासंबन्धस्यैव ब्रह्मणो निरूपणीयत्वेन तद्विहाय 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति मूर्तामूर्तसकलजगत्प्रवेशनिरूपणमयुक्तम्। नच तद्वृत्तिस्थानीयत्वादिह तदुक्तिरिति वाच्यम्। तत्प्रवेशं वक्तव्यमनुक्त्वान्यत्र तदुक्तेरसमञ्जसत्वात्, सूर्यप्रवेशस्य जलइवानिर्वाच्यप्रवेशस्याप्यभिधीयमानस्याभासात्मकेन्तःकरण एववक्तव्यत्वेन जगत्यसच्छे तदुक्ते र्बाधितत्वाच्च। अन्यथा सर्वत्र संबन्धसिद्ध्या सर्वत्रोपलब्ध्यर्हत्वप्रसंगात्। अन्तःकरणावभासात्मकत्वस्य वक्तव्यस्यानुक्त्याप्यतत्परत्वमवसीयते। तस्माच्चेतनाचेतनात्मकजगदुपादानभूतस्य ब्रह्मणो जगदभिन्नत्वात् ब्रह्मप्राप्तिरपि किं तदैक्यरूपा किंवाब्रह्मानुभव इति पूर्वं प्रश्नस्य प्रसक्ततया तत्समाधानाय 'ब्रह्मणो जगदुपादानत्वेपि नात्यन्तमभेदः किन्तु शरीरात्मभावः। अन्तरात्मतयावस्थायैव जगत्सर्जनादिति तत्त्वत्रयविवेकप्रवृत्तोऽयं प्रघट्टक इति भेदप्रदर्शनार्थमेव 'तत्सृष्ट्वा, तदेवानुप्राविशदित्युक्तमिति स्वारसिकः प्रमाणिकोर्थो

वक्तव्य इति बोध्यम् । सर्वदा सर्वव्याप्तस्य सृष्ट्युत्तरकालिकानुप्रवेशोक्तिः कथमितिचेदुच्यते । अभेदभ्रमनिवर्तनार्थमित्थमुक्तमिति । प्रतिवस्तुपुष्कल प्रतात्यनुगुणस्थितिविशेषो वात्रानुप्रवेशः । सौभर्यादेर्नित्यमुक्तादेश्च विविध शरीरपरिग्रहे विलक्षणपरिणामधर्मभूतज्ञानसंबन्धरूपानुप्रवेशवत् तत्सृष्टविचि त्रसंस्थानपदार्थप्रतिनियतनियमनपरिणामतदीयधर्मभूतज्ञानसंबन्ध एव वा तदनुप्रवेशः । अतो न कोपि दोषः । एवमपि न मुख्यः प्रवेश उक्तो भवति, ब्रह्मणः पूर्वमप्रविष्टत्वाभावादितिचेत् अहो ! न केवलमनुप्रविशतिपदार्थ मपितु 'ब्रह्मविदाप्नोतिपर' मित्यादिसंपूर्णाध्यायगतसकलवाक्यार्थसार्थमन्यथ यतोभवतोप्यत्रैवमस्वारस्यशंकावकाशः, स एष सह्यतांतावत् ।

यदपि भाषणमभयप्रतिष्ठोपपत्तेश्चायमेव प्रकरणार्थइति । तदप्यसाधु । स्वभिन्नदर्शनमात्रस्य भयहेतुत्वाभावात् । कर्मपरवशस्य कर्मानुगुणफलदातुश्शा सितुस्सकाशाद्भयमिति हि लोकवेदप्रसिद्धिः । विदुषस्तु 'भिद्यते हृदय ग्रन्थिः— तस्मिन्दृष्टेपरावर' इत्यादिप्रमाणात्स्वभिन्नपरमात्मदर्शनं भयनिवृत्ति हेतुरित्येवांगीकार्यम् । मुक्तिदशायामपि, पतिव्रतायास्सर्वाङ्गसुन्दरपतिदर्शन मिव शेषिदर्शनं शेषस्य भोग्यतामापद्यते । 'भीषास्माद्वातःपवत इति श्रुति रपि कर्मविशेषेण स्थानविशेषं प्राप्तानां चेतनानां शासितुश्शासनातिक्रमे किं भविष्यतीति भयेन स्वस्वकृत्येषु जागरूकतां वदति, एतद्द्वारा शासितुरानन्द मयस्याद्भुतां जगन्नियमनशक्तिं च । अतस्सर्वभयहेतुभूतकर्मजातविधूननात्पु नश्चकारणाभावादेव भयानुत्पत्तेः मुक्तविषयेऽभयंप्रतिष्ठांविन्दत इति स्वव्यतिरे केण नियन्तुरेकस्य वा बहूनां वा स्वसदृशानां सद्भावेप्युपपन्नतरम् । एवंच स्वेनानुभूयमानसंसारभयकारणस्य परमेश्वरशासनातिवृत्तिर्निमित्तकस्य तन्निग्रह रूपस्य कर्मजातस्य प्रमाणप्रतिपन्नत्वरूपसत्ताश्रयस्य सर्वस्य ध्यानापरपर्यायया

विद्यया प्रायश्चित्तभूतया निश्शेषविनाशे कार्यभूतभयनिवृत्त्यवश्यंभावेन 'अभ यंप्रतिष्ठा' मित्यर्थोपपत्तौ तदुपपत्तये प्राकारणिकस्वरसार्थबाधनं "अन्यस्य चाविद्याकृतत्वे" "येषांपुनरीश्वरोन्यः" "एकत्वपक्षेपुनः" इत्यादिविचा रश्च वृथायास एवेति ।

यदप्यत्र व्याख्यानं 'प्रतिष्ठामात्मभावमिति तदपि स्वेच्छाकल्पितवाक्यार्थ सामञ्जस्यसंपादनायेति विदुषां स्फुटम् । तस्य पदस्य तस्मिन्नर्थे कुत्रापि प्रयो गादर्शनात् । नैरन्तर्यविशिष्टस्थितेरेव शब्दतो लाभात् । 'अस्मिन् ग्रामे आगतोदेवदत्तः प्रतिष्ठितः' 'अस्य वाक्यार्थः प्रतिष्ठितः' 'ध्यानं प्रतिष्ठि तमित्येवमेव प्रयोगदर्शनात । इत्थञ्चैतद्विरोध्यर्थबोधकमन्तरपदमपि न भेदद र्शनपरम्, अपितु स्थितिविच्छेदपरम् । ब्रह्मणि स्थितिश्च ध्यानरूपा । अभयं गतोभवतीति फलोक्तेरस्योपायपरत्वावश्यंभावादिति ।

योपि संक्रमणकर्तुः परमात्मत्वे कर्मकर्तृत्वानुपपत्तिपरिहार उक्तः, सोप्युपेक्ष्यः; तस्य परमात्मत्वसाधक प्रमाणयुक्तयभावस्योक्तत्वात् । संक्राम तीत्यस्य उक्तज्ञानार्थकतायाः क्लिष्टत्वाच्च । तदुपरितननिष्कर्षोपि दत्तोत्तर एव, प्रकरणस्य भेदपरताया बहुश उपपादितत्वेन भवदुत्प्रेक्षानवकाशात् । परमा त्मत्वेन सूत्रकृद्वेदाचार्याभिमतस्यानन्दमयस्य जीवत्वोक्तिः ब्रह्मविदाप्नोतीत्युप क्रमप्रभृत्यनुवर्तमानस्य सुस्पष्टं जीवत्वेनात्मसाक्षिकप्रतीतिविषयस्य संक्रमण कर्तुः परमात्मत्वोक्तिश्च वक्तुरतिसाहसिकतां श्रोतुर्विस्मयसागरनिमग्नतांचकल यति, एवं प्राप्तिरूपस्योपसंक्रमणस्य धातुना स्वरसप्रतीतौ तस्यातिक्रमणात्मक बाधपरत्वोक्तिश्च । नहि गुरुमुपसंक्रामति शिष्य इत्यादौ गुरुं बाधते विनाश यतीत्यर्थः प्रतीयते । न वा भ्रान्तिगृहीतस्य रजतस्य शुक्तित्वज्ञानेन बाधोभव

तीतिज्ञापनाय शुक्तीरजत मुपसंक्रामतीति प्रयोगो दृश्यते । चैतन्याभावस्तु शुक्तिपरमात्मनोरविशिष्टः । नवा कश्चिद्राजकुमारोबाल्ये वनेभ्रष्टः केनचिद्व्याधेन वर्धितो व्याधंमन्यः प्राप्ते वयसि केनचिद्धास्तवं राजत्वं विज्ञाय पत्तने पितुरन्तिकं प्राप्तः 'अयमिदानींव्याधमुपसंक्रामती' ति व्यवह्रियते । तस्माद्धेदवोधकप्रकरणानाघ्रातं प्रत्युत तद्विरुद्धमविद्यारोपबाधादिकं स्वयं परिकल्प्य तदनुसारेण संक्रमणशब्दस्य लोकवेदविरुद्धार्थकत्वकथनमभिज्ञोपेक्ष्यमेव । नच वाच्यं मुख्यासंभवाद्गौणंगृह्यतइति । मुख्यग्रहणसंभवात् । सविभूतिकब्रह्मानुभवरूप ब्रह्मप्राप्तेरेव मोक्षरूपतायाः प्रमाणप्रतिपन्नत्वेन 'ब्रह्मविदाप्नोतिपरं' 'सोऽश्नुतेसर्वान्कामा' नित्युपक्रमसिद्धत्वेन च तदानुगुण्येनैव फलवाक्यार्थनिर्णयस्यावश्यकतया 'अस्माल्लोकात्कर्मफलानुभवस्थानात्प्रेत्य परलोकं प्राप्य देहप्राणमनोजीवविशिष्टमानन्दमयं दिव्यमंगलविग्रहविशेषविशिष्टं परमात्मानं वासुदेवमुपसंपद्य मुक्तबन्धो भवतीत्यर्थकतैव युक्ततमेति न मुख्यार्थग्रहणेऽनुपपत्तिगन्धः । एतेन नहि जलूकादीनामिवेत्यादिकं सर्वं दत्तोत्तरं वेदितव्यम् । सर्वगतस्यात्मनः कथमिदानीं संक्रमणमित्यपि न । सर्वगतस्याप्येतावता स्वेनाननुभूतस्य विग्रहेदानीं विग्रहविशेषसमीपप्राप्ति पूर्वकानुभवोपपत्तेः । नन्वेवं भवतापि ज्ञानार्थकमेव तदंगीकृतमिति तन्निरसनं कथमुपपद्यत इतिचेन्न । समीपप्राप्तिमात्रवाचित्वेन ज्ञानवाचित्वानंगीकारात्, विग्रहविशेषसमीपप्राप्ते धर्मभूतज्ञानद्वाराऽन्नमयादिसर्वजगत्समीपप्राप्तेश्च विवक्षितत्वात् । अस्तु वा ज्ञानवाचित्वम् । नचैतदस्माभिर्निरस्यते । किंतर्हि? बाधपर्यवसन्नातिक्रमणापरपर्यायज्ञानविशेषवाचित्वम् । स्थाप्यते च प्रकरणानुगुण्यात्प्रयोगप्राचुर्याच्चानुभवात्मकज्ञानवाचित्वम् । किंबहुनोक्तेन । यःकश्चिदर्थोभवतूपसंक्रामतिपदस्य, यस्मिन्नर्थे आश्रीयमाणेसंक्रमितुरानन्दमयसंबन्धः प्रतीयते, सोर्थोग्राह्यो नेतरइति ।

यदप्युक्तं वस्त्वन्तराभावाद्गौणार्थकत्वमिति, तदपि पूर्वमेव सुदूरंनिरस्तम् प्रकरणेस्मिन् ब्रह्मवित्—विज्ञानमयः—भीषास्माद्वातः—इत्यादौ परमात्माति रिक्तानां चेतनानामन्नमयाद्यचेतनानांचाबाधितप्रतीतिविषयतया वस्तुत्वावश्यं भावेन व्यतिरिक्ताभावासिद्धेः। उक्तैरेव हेतुभिर्निगमनग्रन्थोपि परिहार्यः; प्रकरणे ब्रह्मनिर्विकल्पताया बहुभवनसर्गप्रवेशादीनां तत्रतत्र कल्पितताया श्च सूचकलेशोपि नास्तीति प्रागेव प्रतिपादनात्। शतशः प्राप्तेवसरे प्रतिपाद यिष्यमाणत्वाच्चेत्यलम्। तस्मादानन्दमयमुपसंक्रामतीत्युक्तरीत्या भृगुवल्ल्यनु साराच्च ब्रह्मप्राप्तिरूपं फलं कण्ठोक्तमित्यभ्युपगम एव युक्ततर इति स्थितम्। यत्तु शांकरं भृगुवल्ल्यां 'अनुसंचरन्—सर्वात्मनेमांल्लोकानात्मत्वेनानुभवन्निति; तन्न। अनुसंपूर्वकचरतेरनुभवार्थकताया अस्वरसत्वात्। स्वरसार्थसंभवेसति अप्रयुक्तलक्षणाश्रयणस्यानुचितत्वात्। "तस्य सर्वेषु लोकेषु कामचारोभव तीत्यन्यत्र ब्रह्मवेदनफलत्वेन श्रुतस्य सर्वलोककामचारस्यात्र लोकान्कामरू प्यनुसंचरन्निति लोककामशब्दाभ्यां चरतिना च प्रत्यभिज्ञानात्तत्समानार्थकताया एव युक्तत्वाच्च। यत्तु तस्यामुपनिषदि तत्प्रकरणशांकरं 'प्राणादिषुपूर्वमुक्तंय त्परिच्छिन्नंकामचारत्वमर्थप्राप्तंचान्यराजत्वं, यथाप्राप्तस्वाराज्यकामचारत्वानुवा देन तन्निवृत्तिरत्रोच्यते 'सस्वराडित्यादिनेति; तदत्यन्तायुक्तम्। तथाहि- अत्र तन्निवृत्तिरिति किं स्वारज्यकामचारनिवृत्तिरुतान्यराजत्वाल्पकामचारनि वृत्तिः? नाद्यः, स्वाराज्यस्य प्रागप्राप्तत्वात्, अर्थप्राप्तमन्यराजत्वमिति भवतै वोक्तत्वात् निवृत्तिबोधकपदाभावात्, तदोयदर्थकत्वाच्च। नान्त्यः; यथाप्राप्तस्वाराज्येत्युक्त्यसंगतेः। अथाब्रह्मोपासकेषुपरिच्छिन्नकामचारस्यो- क्तत्वादन्यराजत्वस्यचार्थप्राप्तत्वाद्ब्रह्म विदस्स्वाराज्यमपरिच्छिन्नकामचारत्वं च प्राप्तमेव। तदत्र केवलमनूद्यते; तन्मुखेन प्रागुक्तान्यराजत्वा-

ल्पकामचारनिवृत्तिरेवात्रोच्यत इत्यभिप्राये इति चेन्न । अन्यराजत्वं निवर्तने परिच्छिन्नकामचारत्वं चेत्यर्थस्य शब्दतोऽनवगम्यमानत्वात् । यद्यप्य नवच्छिन्नस्वाराज्यस्यान्यराजत्वाभावनैयत्यं सर्वलोककामचारस्य परिच्छिन्नका मचारत्वाभावनैयत्यं च विद्यते, तथापि शब्दोपात्तव्याप्यप्रहाणपूर्वकं तदनुपात्त व्यापकमात्रग्रहणं कथमुपपद्यताम् ? ननु मुक्तेर्निर्विशेषब्रह्मभावापत्तिरूपतया तदनन्तरमौपाधिकरूपासंभवेनोक्तएवार्थो ग्राह्य इति चेन्न; भवदभिमत-मुक्तौप्रमाणाभावस्योक्तत्वादुच्यमानत्वाद्वक्ष्यमाणत्वाच्च । किंच परिच्छिन्नकाम-चारत्वाभावः किं कामचाराभावपर्यवसित उत कामचारे परिच्छिन्नत्वाभावपर्य-वसितः । नाद्यः, तादृशस्य सर्वलोककामचारनियतत्वासंभवेनालभ्यत्वात्; नान्त्यः, तथासति ब्रह्मनिर्विशेषत्वरूपभवदिष्टमुक्त्यसिद्धेः । किंच पूर्वमन्यो-पासकेषु यादृशः कामचारो यावान्प्रतिपादितः, तादृशमेव तावतोधिकमपरि-मितं सर्वेषुलोकेष्वितिप्रतिपादयन्त्यांमत्रश्रुतौ परिच्छिन्नकामचारनिवृत्तिमात्र-परत्ववर्णनमपरामर्शकृत्यमेव । अन्यथा "येन्यथाऽतोविदुस्तेषां तत्रतत्र काम चारोभवति, आत्मविदस्तु सर्वेषुलोकेष्वकामचारोभवती" त्येव श्रुत्योपदेष्टव्यं स्यात् । तस्मात्तत्र सर्वलोककामचारस्य मुक्तविषये प्रतिपादनात्तत्प्रत्यभिज्ञया-त्रापि तत्समानार्थकत्वमेव युक्तमिति सिद्धम् । एवमात्मत्वेनेति पूरणमपि न युक्तिमत्, प्रकरणे तदतिरिक्तनिषेधादर्शनात् । तदभ्युपगमेपि लोककर्म कानुभवकर्तृत्वस्य बहुविधभेदगर्भस्य स्वरसप्रतीत्या मनीषितासिद्धेश्च । या तु तत्रोक्तविरोधपरिजिहीर्षामूला 'सर्वान्कामान्समश्नुत' इतिवाक्यतात्पर्यवर्णनपरा जीवन्मुक्तयभिप्राया टीकाकारोक्तिः "अविद्यालेशवशेनद्वैतावभासमनुभवन्विद्वा न्सर्वस्यात्माहमिति मन्यमान" इत्यादिः, साप्यसंगता । निर्गुणब्रह्मविदो मुक्तिरूपफलकीर्तनावसरेऽविद्यालेशानुवृत्तिद्वैतावभासानुभवोक्तेर्युक्तिरिक्तत्वात् । जीवन्मुक्तेरप्रमाणत्वात् दुर्निरूपत्वाच्च । एवं "योगिनांकामान्नित्वंकामरूपत्वं व

ममैवेतिपश्यन्नित्यप्ययुक्तं । एतादृशार्थस्फोरकलेशाभावात् । अतो भृगुवद्धयामनुसंचरणं सर्वलोकेषु देहान्मुक्तस्य कामचार इति सिद्धम् । ननु कथं लोकानिति द्वितीया? कर्मप्रवचनेनानुना योगेन तत्संभवात् । लक्षणेत्थंभूताख्यानेतिंशास्त्रेण तत्संज्ञासौलभ्यात् । यद्यपि चरनेर्भक्षणार्थकत्वं विद्यते तथापि सुखमनुभवतीत्यर्थे सुखंसंचरतीत्यादिप्रयोगादर्शनेनानुभवार्थकत्वोक्ति र्युक्तिविहीनैवेति न तत्र भवदभिमतमुक्तिपरत्वप्रत्याशा युक्तेत्यलम् । प्रकृत मनुसरामः ।

यदप्युक्तं सन्निहितनरत्वात्पुच्छब्रह्मण स्तस्याप्यात्मनआकाश इति पुंलिङ्गशब्देन निर्देशाच्च सोकामयनेत्यादेस्तद्विषयत्वमिति । तदपि न । सन्निहिततमत्वात् तत्रैवपुंल्लिंगेननिर्देशाच्च तस्यैषएवशारीरआत्मेत्यत्रनिर्दिष्टानन्दमयविषयत्वस्यैव युक्तत्वात् । नहि पुंल्लिंगनिर्दिष्टसंन्निहिततमलाभे तद्विहाय तदपेक्षया व्यवहितस्यात्यन्तविप्रकृष्टे स्थलान्तरे पुंल्लिंगेन निर्दिष्टस्य ग्रहणं युज्यते । तस्य वाक्यस्यानन्दमयविषयत्वन्तु संप्रतिपन्नम् ।

यत्तूक्तं **न्यायरक्षामणौ परिमले** च 'तस्यैषएवशारीरआत्मेत्यत्रात्मशब्देन पुंल्लिंगेन प्रकृतस्य ब्रह्मण स्सन्निहिततमत्वात्सइत्यनेन तत्परामर्श इति । तदयुक्तम् । कूटस्थव्याख्यानविरोधात् । तस्य पूर्वस्य विज्ञानमयस्यात्मा एष य आनन्दमय इति तैर्व्याख्यातत्वात् । यदि पूर्वस्य विज्ञानमयस्य यश्शारीर आत्मा, एष एव तस्यानन्दमयस्य शारीरआत्मेत्येवं प्रकारेण व्याख्यांगीक्रियते, तदात्यानन्दमयानन्यात्मत्वपरत्वमेवास्येति न पुच्छब्रह्मग्रहणसंभवः ।

एतदुक्तंभवति—तस्यैषएवेत्यत्र योजनाभेदेन षट् पक्षास्संभवन्ति । तत्र नैकस्मिन्नपिपक्ष आत्मशब्दस्य पुच्छब्रह्मपरत्वं सिध्यति । तथाहि—:

प्राणमयपर्यायस्थश्शारीरात्मशब्दो मनोमयपरः, मनोमयपर्यायस्थोविज्ञानमय-पर:. एवमुपर्यपि। एष इतिपदंवक्ष्यमाणपरम्। तच्छब्द एव यच्छब्दप्रतिसंबन्धी। तथा चायं वाक्यार्थः, यः पूर्वस्यान्नमयस्य शारीर आत्मा प्राणमयस्तस्येषवक्ष्य-माणो मनोमयश्शारीर आत्मेति । एवं पर्यायान्तरेपि। अयमेकःपक्षः ॥ अन्यस्तु योयंप्राणमय एषतस्यपूर्वस्यान्नमयस्यशारीरात्मेति। परस्तु य एष एव प्राणमयस्तस्यान्नमयस्य शारीरआत्मेत्येकमेववाक्यमिति। नच यच्छब्दप्रति-संबन्धिनिर्देशाभावाद्वाक्यापरिसमाप्तिरिति शंक्यम्। यच्छब्दस्य पूर्वप्रस्तुत-परत्वे प्रतिसंबन्ध्यनपेक्षत्वात्। यथा—अथातोब्रह्मजिज्ञासा, जन्माद्यस्ययत इति। इहापि तस्माद्वा—प्राणमयः, तस्यप्राणएवशिरः, तदप्येष श्लोको भवतीति प्रस्तुतएव श्लोकसमाप्तौ 'यःपूर्वस्ये'ति निर्दिश्यत इति। अपरस्तुपूर्वस्यान्नम यस्यान्तरात्मतयासंबन्धी यः एष तस्यान्नमयस्य शारीरात्मापीति । एवकारो ऽप्यर्थः। अपिशब्दाध्याहारोवा। तस्माद्वा एतस्मादन्नरसमयादित्यनेनान्नमयं-प्रत्यन्तरात्मतयावगतः प्राणमयस्तंप्रतिशारीरात्मापीति स एव परमात्मा, धर्म-द्वयस्यास्य परमात्मत्वसाधकत्वादिति तात्पर्यम् । अत्रपक्षेन्तरात्मत्वेनेव शारीरात्मत्वेनापि ब्रह्म लिलक्षयिषितमिति । इतरस्तु यः पूर्वस्यान्नमयस्य शारीर आत्मा परमात्मा तस्माद्वा एतस्मादित्यादिना निश्चितः एष एतस्य प्राणमयस्य शारीरात्मेति। पक्षान्तरमपि, यच्छब्दोन पूर्वोक्ताकाशा दिकारणपरामर्शकः, अतश्च सामान्यतो यः पूर्वस्यात्मा एष एवैतत्पर्यायस्थ-स्यापीति। तथाचोभयमेकात्मकमिति।

तत्राद्ये तावत्—यच्छब्दप्रतिनिर्देशरूपत्वमेवकारसमभिव्याहृत-प्रथमान्तैतच्छब्दस्यैव स्वरसमिति तत्त्यागोनुपपन्नः। एवमर्थवर्णनेनैव प्राणमयं प्रति मनोमयस्यात्मत्वे सिद्धे 'तस्माद्वै—मनोमय' इत्यस्य वैयर्थ्यंच।

उक्तरीत्यानन्दमयपर्यायेऽर्थवर्णनमपि न संभवति, वक्ष्यमाणाभावात्, अनन्तरं प्रश्नोपक्षेपात् । द्वितीयेऽपि यच्छब्दपूर्वशब्दवैयर्थ्य, अयमित्यध्याहारः, भिन्नवाक्यस्थयोस्तच्छब्दपूर्वशब्दयोरन्वयास्वारस्यं चेति दोषत्रयम् । एवं तृतीयेऽप्यूह्यम् । चतुर्थेच पूर्व'मन्योन्तरआत्मेति अन्यत्वविशिष्टात्मत्वस्य शरीरप्रतिसंबन्धित्वरूपतायाः प्रतिपन्नत्वेनात्मत्वशारीरात्मत्वयोरभिन्नत्वेन 'योन्तरात्मासशरीरआत्मापीत्यर्थवर्णनमसंभवल्लक्ष्यते । केवलं शारीर इतिसंज्ञान्तरेण पूर्ववैशद्यमात्र मिति । इदं पक्षचतुष्टयमपि त्वदननुकूल-मेवेतिस्पष्टम् । अत्र तस्यैष एव शारीरआत्मेति आत्मशब्देनानन्दमयस्यैव ग्रहणात् । प्रथमपक्षेप्यात्मान्तरस्य वक्ष्यमाणस्याभावेनानन्दमयस्यैव ग्राह्यत्वात् ।

पञ्चमे च पक्षे प्रागयमर्थो विज्ञेयः । तस्माद्वा एतस्मादात्मन आकाशस्संभूतइत्यादिनाऽन्नात्पुरुषइत्यन्तेनाकाशादिशरीरान्तविकारजातं प्रति आत्मनइत्यत्रात्मशब्दवाच्यस्य शरीरप्रतिसंबन्धित्वरूपमात्मत्वंविकारजातस्य शरीरत्वमाकाशादिकारणत्वोक्त्या जीवसामान्यविलक्षणत्वं च सिद्धम् ।

अथोत्तरवाक्यानां योजनाविषये—: अन्नमयान्तस्य परामात्मविकार-त्वकीर्तनात्तदात्मकत्वं सिद्धं, प्राणमयादौ तु तदसिद्धमितियथान्नमयान्तस्य स आत्मा तद्वत्प्राणमयादेरपीति तस्यैषएवेति वाक्येनोच्यते । अन्योन्तर-आत्मेत्यादिकं दृष्टान्तार्थम् । तत्रान्नमयाद्यन्तरात्मत्वं प्राणमयादेः कल्प्यते । यथान्नमयात्प्राणमयोन्यः यथाच तस्मान्मनोमयः यथाच ततो विज्ञानमय एव मस्मादानन्दमयोपीतिवाक्यार्थः । परमात्मनो जीवभेदबोधनायैव कोशावतार इत्यभ्युपगमादित्येकं मतम् । अन्यत्तु—: उक्तविकारजातानन्तर्गताना-मुत्तरोत्तरं सूक्ष्माणां प्राणमयमनोमयविज्ञानमयानां लोक आत्मत्वभ्रान्ति-विषयाणां सत्त्वेन तेष्वन्यतम एवात्मा भवतु, चेतनत्वेन संकल्पादेरुपचित-

पुण्यविशेषत्वेसत्याकाशादिकारणत्वानुगुणशक्तेश्च संभवेन सएववा सर्वान्तरात्मा भवत्विति शंकायां नैप्यन्नमयादिकारणत्वेनोक्तस्यात्मनश्शरीरभूताएवेति न नेषां सर्वान्तरत्वात्मत्वेइत्नीममर्थं प्रदर्शयितुमुपरितनसंदर्भः प्रवर्तते । 'तस्माद्वा—प्राणमयः' । अयंच तस्यैषएवेतिवक्ष्यमाणनिषेधार्थं प्राणमयस्य भ्रान्तिसिद्धात्मत्वानुवादः । उपरितनवाक्यजातं तत्स्तावकम् । "तस्यैषएव—यः पूर्वस्य" । पूर्वस्यान्नमयस्य यश्शारीर आत्मा'आत्मनआकाशइत्यत्रोक्तः । एषएव तस्य प्राणमयस्यात्मेत्यर्थः । प्राणमयस्यापि सएवात्मेति प्राणमयो-प्यन्नमयवत्तच्छरीरमेव । तस्मान्न स सर्वान्तरात्मा भवितुमर्हतीति भावः । तर्हि न भवत्वयमात्मा, अस्मादपिसूक्ष्मो मनोमय एव स भविष्यतीत्यत्र तस्यापि तच्छरीरत्वादन्नमयादिवदात्मत्वं नेति निषेधितु मनुवदति तस्माद्वा—मनोमयइति । एवं विज्ञानमयेपि । तस्मात्सर्वापेक्षयाऽन्तरत्वादानन्दमय-एवाकाशादिकारणभूतआत्मेत्याह तस्माद्वा—आनन्दमयइति । नास्मिन्पर्याये पूर्ववदनुवादोनिषेधश्चेति वर्णयितुं शक्यं । अनन्तरमात्मोपदेशादर्शनादिति । अस्मिन्मतद्वयेपि न स्थूलारुन्धतीन्यायः । यदापुनरित्थमर्थो वर्ण्यते—: आत्मन आकाशस्संभूतइत्युक्तोन्नमयान्तविकारजातान्तरात्मा क इति जिज्ञासायां आनन्दमयोयमिति प्रदर्शयितुं क्रमेणप्राणमयमनोमयविज्ञानमयानात्मत्वेन प्रदर्श्य तत्रतत्र तद्बुद्ध्यारोहे पुनस्तत्र तद्बुद्धिं निषिद्ध्य प्रक्रान्तात्मत्व-बुद्धिरानन्दमये स्थाप्यते । 'तस्माद्वा—प्राणमयः' देहादन्यस्तदन्तरः प्राणमय एव पूर्वोक्तः परमात्मेत्यर्थः । एवमुक्तं परमात्मत्वं निवर्तयति तस्यैषएवेति । अन्नमयस्य प्राणमयस्य चैकएवान्य आत्मा, नत्वन्नमयस्य प्राणमयइत्युक्तं भवति । स क इत्यत्राह तस्माद्वा—आनन्दमयइति । जीवादन्यस्तदन्तरआनन्दमयएव पूर्वोक्तआत्मेत्यर्थइति ; तदास्थूलारुन्धती-

न्यायः । एवमुक्तेष्वन्येष्वपि पक्षेषु यत्र प्रथमतः प्राणमयादावात्मत्वारोपः पश्चाच्च तन्निवर्तनं तत्र सर्वत्र स्थूलारुन्धतीन्यायः । तत्रतु क्वचित् पक्षे 'तस्माद्वाएतस्मात्—प्राणमय' इति वाक्येनात्मत्वारोपः, तस्यैष एव शारीर इति यथोक्तस्यानुवादः, तस्माद्वाएतस्मादित्युत्तरवाक्यात्तन्निवर्तनम् । क्वचित्तु तस्यैषएवेति वाक्येनैव तन्निवर्तनमिति भेदः । यत्र तु नारोपनिवर्तने भवतस्तत्र नैष न्याय इति स्थितिः । एवंच शांकरव्याख्यानरीत्यनुसारे आनन्दमयेऽवतारितस्यात्मत्वस्य उपरि 'तस्माद्वाएतस्मादन्योन्तरआत्मेति निर्देशाभावादानन्दमय एव प्रतिष्ठितत्वं सिद्ध्यति । तन्माभूदिति यदि तांरीतिमुत्सृज्यायं पञ्चमः पक्षोगृह्यते, तदापिनेष्टसिद्धिः । अन्नमयाद्यन्तरात्माऽऽधस्तादुक्तः कइत्याकांक्षायां तच्छमनाय हि प्राणमयादिनिरूपणम् । ततश्च यथा तत्रतत्रपर्याये पूर्वोक्तपरमात्मन आत्मत्वनिरूपणे तदनन्तरं कोसाविति पुनराकांक्षायां पर्यायान्तरारंभः तथात्रापि तस्यैषएवेत्यस्यानन्दमयातिरिक्तात्मतात्पर्यकत्वे पूर्ववत्संभवन्तीं कोसावित्याकांक्षां शमयितुं तस्माद्वाएतस्मादन्यइति वक्तव्यमेव स्यात् । अनुक्त्या च ज्ञायते तत्रैषएवेत्यानन्दमय एव ग्राह्य इति । नन्वत्र पक्षे सदिष्टसिद्धौ न किञ्चिद्बाधकम् । पूर्वस्य विज्ञानमयस्य बुद्धेर्यश्शारीर आत्माऽऽकाशादिकारणभूतः परमात्मा एषएवानन्दमयस्य जीवस्यात्मेत्यर्थांगीकारे आत्मशब्दस्य ब्रह्मपरत्वानपायात् । जीवापेक्षया सूक्ष्मस्य परमात्मातिरिक्तस्यकस्यचिदभावेनैव पर्यायान्तरानारम्भोपपत्तेः । सर्वापेक्षया सूक्ष्मस्य जीवस्याप्यात्माऽऽकाशादिकारणभूतः परमात्मेत्यर्थस्य प्रतिपादिततया पुनराकांक्षानुदयादितिचेन्न । आनन्दमयान्तरात्मनो दुर्वचत्वात् । अन्तःकरणावच्छिन्नात्मा हि जीवः । सचात्मा परमात्माभिन्न इति तदन्तरात्मत्वं परमात्मनो हि न

संभवति । नचात्मशब्द इह स्वरूपपरः पर्यायान्तरवैरूप्यात् । तत्र प्राणमयादेरन्नमयादिस्वरूपत्वाभावात् । शारीर आत्मेति शरीरप्रतिसंबन्धित्वरूपात्मत्वस्य मुक्तकण्ठमुक्तत्वाच्च । नचान्तःकरणात्मत्वमेवानन्दमयान्तरात्मत्वम् : आनन्दमयपदे लक्षणाप्रसंगात् । तस्य विज्ञानमयपर्यायेणैव सिद्धतया वाक्यानर्थक्यप्रसंगाच्च । नच जीवः परमात्मप्रतिबिंब इति भेदादानन्दान्तरात्मा परमात्मेति वाच्यम् । प्रतिबिंबान्तर्बिंबावस्थानादर्शनात् । प्रतिबिंबस्थले बिंबसत्त्वे प्रतिबिंबांगीकारस्यानावश्यकत्वात् । जीवस्य प्रतिबिंबत्वे जीवब्रह्मैक्यस्यैव त्यागप्रसंगात् । तत्त्वमसीति महावाक्यावगतमहनीयार्थबाधप्रसंगात् । त्वंपदस्य प्रतिबिंबवाचिनो बिंबपरत्वे च लक्षणादोषः । अशक्यवर्णनं च नीरूपस्य परमात्मनः प्रतिबिंबनमित्यन्यत्रविस्तरः । अतोऽयमयुक्तश्चासंमतश्च प्रतिबिंबपक्षः । तस्मादस्यानन्यात्मकत्वपरत्वमेवेति नास्मिन्पक्षेपि त्वदिष्टसिद्धिः ।

किंच विज्ञानमयशब्दस्य प्राचुर्यार्थकमयडन्तताया: पूर्वमेव सयुक्तिकं स्थापितत्वेन तस्मादपि सूक्ष्मत्वस्य परमात्मन्येव संभवेनानन्दमयस्य बहुभिर्हेतुभिः परमात्मत्वस्योपपादितत्वेनचास्य वाक्यस्य तादृशार्थकत्वं न युज्यते । अपिच पूर्वमभ्यस्तस्यानन्दस्यानन्दंब्रह्मणो विद्वानिति ब्रह्मसंबन्धित्वनिर्देशात् ब्रह्मणश्चानन्दशब्दवाच्यत्वादानन्दोब्रह्मेतिव्यजानादित्यानन्दशब्दस्थान आनन्दमयमात्मानमुपसंक्रम्येत्यानन्दमयशब्दनिर्देशेन तयोः पर्यायत्वावगमाच्चानन्दमयस्य परमात्मत्वमवश्यांगीकार्यमिति नैतद्वाक्यमानन्दमयं प्रत्यात्मान्तरप्रतिपादनसमर्थम् । नच वाच्यं भृगुवल्ल्यामानन्दमयस्य परमात्मत्वमात्रेण कथमत्रत्यानन्दमयस्यतत्त्वमिति । स्थानसाम्येन तत्सिद्धेः । उपसंक्रमणस्यानुभवात्मकप्राप्तिरूपतायास्सुष्ठूपपादितत्वेन न

तत्र तदुक्तिनिबन्धनाब्रह्मत्वशंकावतारः । नन्वानन्दमयस्य ब्रह्मत्वेन प्राप्तसंभवेपि कथमन्नमयादीनां त्याज्यानां तत्संभवः? अतस्तत्रानन्दमयान्तानां सर्वेषामतिक्रमणीयत्वमानन्दमयस्याब्रह्मत्वंचावश्यमेष्टव्यमिति चेन्न। सेविभूतिकब्रह्मण एव प्राप्यत्वाभ्युपगमेन दोषाभावात्। अन्नमयादिशब्दानां तत्तच्छरीरकपरमात्मपरत्वात्। अतएवच पूर्वत्रान्योन्तरआत्माप्राणमयइत्यादिषु प्राणमयादिशब्दानां परमात्मपर्यन्तत्वमंगीक्रियते । वैरूप्यायोगात् । श्रोतुर्बुद्धिस्तन्मात्रइतितत्वन्यत् । यद्वान्नमयमात्मानमुपसंक्रामति—उपसंक्रम्येत्युभयत्रापि पूर्वानुरोधादन्नमयादिपदानां तत्तन्मात्रपरत्वमेवांगीक्रियते । विद्वानस्माल्लोकाद्ब्रह्मलोकं प्राप्य ब्रह्मविभूतिभूतमन्नमयाद्युपलक्षितंसर्वमचेतनप्रपञ्चं विज्ञानमयपदवाच्यं सर्वं चेतनजातमानन्दमयं परमात्मानं च मुक्तकर्मबन्धोविश्वव्यापिना धर्मभूतज्ञानेनोपसंक्रामति निरतिशयानुकूलतयानुभवतीत्यर्थसंभवादित्यास्ताम् । तस्मादिह स्थानसाम्येन परमात्मत्वसिद्धिरिति । एवं पञ्चानामपि मयटां प्राचुर्यार्थकत्वस्यैवास्मदभिमततया तत्रानन्दमयस्यान्यथास्थानसाम्यप्राबल्यवर्णनमपि निरस्तं वेदितव्यम्।

एवं षष्ठेपि स्थूलारुन्धतीन्यायादिस्थितिरूहनीया। अत्रच पक्षे'यः पूर्वस्यान्नमयस्यात्माएषएवप्राणमयस्यापीत्येवं पूर्वपर्यायत्रयेप्यर्थइति यच्छब्दस्सामान्यतोबुद्धिस्थपरामर्शकः तथाभ्युपगमएव पुनरात्मान्तरोपदेशसामञ्जस्यात्। अन्तिमपर्याये तु अनन्तरमात्मोपदेशादर्शनेन तथाभ्युपगमायोगादन्योन्तरआत्मानन्दमयइत्यत्रोक्तानन्दमयपरामर्शकः । ततश्चानन्दमयस्यानन्दमय एवात्मेत्युक्तावनन्यात्मत्वसिद्धिः । पूर्वत्रतु नैवमाश्रयितुं शक्यं, तथासतिअनन्यात्मत्वपर्यवसानेनात्मान्तरोपदेशानुपपत्तेः । ततश्च तत्र वक्ष्यमाणत्वेन बुद्धिस्थपरामर्शित्वमेवाङ्गीकार्यम् । पक्षेस्मिन्परमात्मत्वलिंगभूतेना-

नन्यात्मत्वेनानन्दमयस्यपरमात्मत्वमितरानिरपेक्षं सिद्ध्यतीति ध्येयम् । तथाचात्मान्तरशून्यआनन्दमयएवाकाशादिकारणभूतः परमात्मेतितात्पर्यम् ।

तस्मात् षट्स्वपि पक्षेषु नानन्दमयशब्दो जीवपरः, नवात्मशब्दः पुच्छब्रह्मपर इति नैतदनुरोधेन सोकामयतेत्यत्र तेच्छब्दस्य सन्निहिततम-पुल्लिंगशब्दनिर्दिष्टपुच्छब्रह्मपरामर्शित्ववर्णनं संभवतीति । किञ्चसर्वनाम्ना-मुत्सर्गतः प्रधानपरामर्शित्वस्यैवशास्त्रस्थैरभ्युपगमादत्रानन्दमयपर्याये प्रधान-तयानिर्दिष्टानन्दमयपरामर्शित्वमेव सइत्यस्य युक्तम् । ब्रह्मणः पुच्छत्वेना-प्राधान्यात् । यस्माद्राजपुरुषः प्रस्तावं नीतस्तस्मात्तदुक्तं स्मृत्वा वक्ष्यामीत्यादौ लोके तथैवानुभवात् । इत्थंच रसोवैस इत्यस्यानन्दमयविषयत्वं निराबाधमिति बोध्यम् ॥

यत्तूक्तं भृगुवल्ल्या मानन्दोब्रह्मेतिव्यजानादित्यत्रानन्दपदवाच्यं ब्रह्मेति, तदङ्गीकुर्मः । मयडश्रवणात्प्रियशिरस्त्वाद्यभावाच्चेतिहेतुं तु प्रतिषेधामः । मयटः प्राचुर्यार्थत्वा त्प्रियशिरस्त्वादेर्बुद्ध्यारोहार्थकल्पितत्वाच्च नयोर्ब्रह्मत्वविरोधित्वायोगात् ।

यदप्युक्तं निगमनारम्भे-तस्मादन्नमयादिष्विवानन्दमयेपि विकारार्थ एव मयडित्यादि—तदपि न । आनन्दमयपदस्य जीववाचित्वे ब्रह्मवाचित्वे वा मयटो विकारार्थत्वासंभवात् । नहि जीवस्य ब्रह्मणो वा घटादेरिवमृदादि-परिणामरूपत्व मानन्दपरिणामरूपत्वं केनापीष्यते । विकारवाचिनश्च मयटः प्रकृत्यर्थान्यथाभावात्मकविकारवाचित्वमेव युक्तम् । तस्यैव मुख्यविकारत्वात् । पर्णमयी जुहूः, हिरण्मयं कुण्डलम्, मृन्मयो घट इत्यादौ तादृशविकार एव प्रयोगाच्च । तस्माज्जीवस्य वा ब्रह्मणोवाऽऽनन्द-

रूपब्रह्मपरिणामत्वं धर्मभूतज्ञानपरिणामत्वं वा न संभवतीति मयटः प्राचुर्यार्थकत्वमेवाऽऽश्रयणीयम् ।

यत्तूक्तं **न्यायरक्षामणौ**—आनन्दमयइत्यत्र मयड्विकारार्थएव । पूर्वत्र चतुर्षु पर्यायेषु तस्य तदर्थकत्वदर्शनात् । तत्रह्यन्नरसशब्दो देहपरः । तदवच्छिन्नत्वेन तत्कार्यतया तद्विकारभूतो जीव एवान्नरसमय इत्युच्यते । एवं प्राणमयशब्दः प्राणावच्छिन्नजीववाची । एवमुत्तरत्रापि । नचवाच्यं स्वतः कार्यत्वविशिष्ट एव मयड् भवति, नत्वौपाधिककार्यत्वविशिष्ट इति । एतादृशनियमकल्पने प्रमाणाभावादिति । तदत्यन्तासंबद्धम् । आत्मनो देहप्राणादिविशिष्टत्वेपि तत्कार्यत्वायोगात्, तथा प्रामाणिकानां व्यवहाराभावात् । अन्यथा घटावच्छिन्नाकाशस्य घटकार्यत्वप्रसङ्गेन घटमयआकाश इतिप्रयोगापत्तेः । किंबहुना परिच्छिन्नविषयेपि गृहमयोघटः, दर्पणमयं, जलमयं मुखमित्यादिप्रयोगो दुर्वारः । अत स्स्वतःकार्य एव मयडित्याश्रयितुं युक्तम् । इत्थंच "प्राणाद्युपाध्यवच्छिन्नोह्यात्मा भवतिप्राणादिविकारः, घटाकाशमिव घटविकार"इत्यत्रदृष्टान्तोपन्यासोपि स्वमनीषया तत्सिद्धवत्कारेणेति ध्येयम् । उक्तरीत्या तदवच्छिन्नस्य तत्कार्यत्वासंभवं, अतएवदृष्टान्तदौर्घट्यं चाभिप्रेत्यैव तत्र कल्पतरौ 'अथवे'त्यादिपक्षान्तरारम्भ इति प्रतीमः । तस्यायमर्थः—भृगुवल्ल्यामन्नप्राणमनोविज्ञानशब्दाः क्रमेण श्रूयन्ते । तेच विराट्पुरुषहिरण्यगर्भाख्यब्रह्मसंबन्धिसमष्टिशरीरादिपराः । आनन्दवल्ल्यां तएव मयडन्ताश्श्रूयन्तइति तत्कार्यभूतव्यष्टिजीवशरीरादिपरा इति युक्तम् । व्यष्टिशरीरादे स्समष्टिशरीरादिकार्यत्वेन तद्विकारत्वोपपत्तेः । अतएव तत्रानन्दपदस्य ब्रह्मपरत्ववदत्रानन्दमयपदस्य तद्विकारजीवपरत्वं युक्तमिति । नन्वेवमपि सिद्धान्ते विकारार्थकमयट्प्रायपाठः प्रकारान्तरेण

ममायान इति किमस्योत्तरमितिचेत्. इदमेवेत्येवहि । सामान्यतो भृगुवल्ल्याम्नानान्नप्राणादिशब्दानां हिरण्यगर्भसंबन्धिशरीरादिपरत्वे, जीवसंबन्धिशरीरप्राणादीनां हिरण्यगर्भसंबन्धिसमष्टिशरीरादिकार्यत्वे च न किंचित्प्रमाणमुपलभ्यत इति । एवंच सामान्यशब्दस्य विना गमकं विशेषपरत्वाश्रयणायोगात्. "महाभूतान्यहंकारो बुद्धिरव्यक्तमेवचे"त्यादिना शरीरादीनां स्वातन्त्र्येण महाभूतकार्यत्वप्रतीतेश्चायुक्तैवसा कल्पना । विज्ञानमयस्य जीवत्वं पूर्वमेव स्थापितम् । स्वरूपपरिणामरहितस्य जीवस्य ब्रह्मविकारत्वं चासंभवदुक्तिकम् । किंच भवद्रीत्या जीवशरीरादे र्हिरण्यगर्भशरीरकार्यत्ववज्जीवस्य हिरण्यगर्भकार्यत्वमेव युक्तम् । तदर्थमानन्दपदमपि तत्परमेव व्याख्यातव्यम्, न ब्रह्मपरम् । विव्रियते च तत्साक्षाद्ब्रह्मपरं त्वत्कूटस्थैः । अतः प्राणमनोविज्ञानानां सूक्ष्मत्वस्थूलत्वावस्थाद्वयाभ्युपगम स्तन्निबन्धनःपरिणामपरिणामिभावस्वीकारश्च युक्तिप्रमाणविधुर एवेति स्वेच्छापरिकल्पितमिदमुपेक्ष्यमेवेति । किंचात्मन औपाधिकं विकारत्वमिति वदतः कोभिप्रायः । अन्नरसाद्युपाधिसंबन्धस्य कार्यत्वेन विकारतया संबन्धिनोप्यात्मनो विकारत्वमितीति चेत् न।संबन्धस्य कादाचित्कत्वेन कार्यत्वेप्युपाधिविकारत्वाभावेन तद्द्वाराऽऽत्मनि तदुपपादनायोगात् । नहि भूतलसंबन्धस्य भूतलपरिणामत्वव्यवहार स्तन्निबन्धनो भूतलमयोघटइति व्यवहारो वा दृश्यते। नहि कोपि निरूपको घटेभूतलमयः, भूतलेघटमयः, आकाशेघटमय इत्यादि प्रयुङ्क्ते । संबन्धस्य परिणामत्वाभावेपि संबन्धिनि तदभ्युपगम्यत इति तु न युक्तिमत् । स्वतःपरिणामत्वशून्यस्यात्मनस्तद्द्वारैव तस्य वक्तव्यत्वात् । तस्माद्विकारार्थकमयट्प्रायपाठासिद्ध्या तद्धेतुकमानन्दमयइत्यत्रमयट स्तदर्थकत्वकथनमसंगतमिति सिद्धम् ।

किंचानन्दपदाद्विकारार्थे "नित्यंवृद्धशरादिभ्य "इतिस्मृत्या हि मयड्वक्तव्यः । स न संभवति । तत्र सूत्रे "मयड्वैतयोर्भाषाया "मिति सूत्रा द्भाषायामित्यस्यानुवृत्ते श्शाब्दिकैरुक्तत्वा च्छन्दसि तत्प्रवृत्त्ययोगात् । शास्त्रान्तरस्यचानुपलम्भात् ।

यत्तूक्तं **परिमले** तत्र सूत्रे भाषायामित्यस्यानुवृत्तावपि न किंचिद्बाधकम् । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं व्यर्थं सद्भाषायामेव नित्यं मयट्, छन्दसि तु दृष्टानुरोधेन भवतीत्यर्थकमित्यङ्गीकारेण प्रकृते तदुपपत्तेः । एकदेशानुमतिद्वारा "एकाचोनित्य "मिति व्याकरणान्तरगतसूत्राभ्युपगमपरं तदिति तु न शङ्क्यम् । तथासति शरादिगणे मृच्छब्दपाठवैयर्थ्यापत्तेः । ननु नित्यग्रहणस्योक्तार्थकत्वे व्याकरणान्तरगतस्य तस्य पाणिन्यनभिमतत्वशङ्का स्यादिति चेन्न । मृच्छब्दस्यैकाज्मात्रोपलक्षणत्वाङ्गीकारेणादोषादिति ।

तत् स्वकूटस्थोक्तेस्साधुत्वसमर्थनश्रद्धाविलसितम् । शास्त्रव्याख्यानप्रवृत्ताभियुक्ताभिमतविरुद्धस्यार्थस्यस्वेच्छयापरिकल्पनेन शास्त्रार्थान्यथाकरणचेष्टितस्य शब्दशास्त्रेप्यवकाशविधानस्यायुक्तत्वात् । "मयड्वैतयो "—रित्यत्र भाषाग्रहणसामर्थ्याद्वेदे बह्वचः प्रातिपदिकात्परस्य मयटः प्राचुर्यार्थकत्वमेवेति शाब्दिकैरुपवर्णिततया 'नित्य 'मित्यस्य छन्दसि दृष्टानुरोधो भवतीत्येतत्तात्पर्यकत्वस्य तद्विरुद्धत्वेन हेयत्वात् । यदि वेदे आनन्दादिबह्वच्कप्रातिपदिकेभ्यः परस्य मयटो विकारार्थकत्वमाश्रीयते तदा 'मयड्वैतयो 'रिति सूत्रे भाषाग्रहणं व्यर्थमेव स्यात् । तद्धि वेदे "एकाचोनित्यम्" "द्व्यचश्छन्दसा "त्याभ्या मेकाच्कद्व्यच्कप्रातिपदिकेभ्यः परस्य मयटो विकारार्थत्वाभिमते ज्ञाततया परिशेषाद्बह्वच्केभ्यःपरस्यतस्यतदर्थत्वनिवृत्त्यर्थ-

मित्यङ्गीकार्यमिति तेषामाशयः । अतोभाषाग्रहणं कुर्वतस्सूत्रकारस्य, "भाषायां किम्? खादिरोयूप इति बह्वच्कमुदाहरतोवृत्तिकृतश्चानिष्ट-मेवेदमानन्दपदोत्तरमयटो विकारार्थकत्ववर्णनमिति । एवं नित्यपदाभावे 'भाषायां' वृद्धशरादिभ्यो मयडित्यर्थे सति 'मयड्वैतयो'रित्यनेनैव सिद्धे किमर्थमिदमिति जिज्ञासायां भक्ष्याच्छादनरूपार्थेपि प्राप्त्यर्थमित्यपि तात्पर्य-वर्णनसंभवेन तद्द्वारणेन वृद्धशरादिविषयेपि विकल्पनिवृत्तितात्पर्यबोधनार्थ-न्नित्यपदमिति सार्थक्यमपि किं न संभवति । नचैवं नित्यपदवैयर्थ्यं शाब्दिकसंमतं विरुध्यत इतिवाच्यम्, नित्यपदस्य एकाचोनित्यमित्यर्थगम-कत्वस्यापि शब्दवित्तमसंमतत्वेन भवतांतद्विरुद्धतात्पर्यवर्णनस्य तर्हि हेयत्वात्। शरादिषु मृच्छब्दपाठस्य च स्पष्टार्थता एकाचोनित्यमित्यस्यानित्यत्व-ज्ञापकतावेत्यपि शाब्दिकैरेवोक्तमित्यलम् ।

किंच "विकारशब्दान्नेतिचेन्ने"तिसूत्रेण भगवतैवात्रत्यमयटो विकारार्थकत्वनिरसनपूर्वकं प्राचुर्यार्थकत्वं स्थाप्यत इति नात्र सूत्रकन्निर-स्तार्थकत्वशंकापि शोभते । तस्य सूत्रस्य स्वबुद्धिपरिकल्पितात्यन्तास्वरसार्थकत्वं तु परस्तान्निरसिष्यते । अपिच "सैषानन्दस्यमीमांसाभवति, स एको ब्रह्मण आनन्दः, यतो वाचो निवर्तन्ते, आनन्दं ब्रह्मणो विद्वा"नित्यग्रिमसंदर्भेण ब्रह्मसंबन्ध्यानन्दस्य निरतिशयत्वात्मककाष्ठाप्राप्तप्राचुर्यप्रतिपादने, प्रत्ययस्य तदर्थबोधनसामर्थ्ये च सति तदेवाऽऽश्रयितुं युक्तम्, न प्रकरणसूत्रकृदाशय-विरुद्धम् । अत्र हि ब्रह्मविदाप्नोतिपरम् "सोश्नुते सर्वान्कामान् सह ब्रह्मणा" इति प्राप्यत्वेन प्रक्रान्तमेव प्राप्यत्वोपपत्तये प्रचुरानन्दमानन्दमय-इत्यनेन प्रतिपाद्यत इति, इदमेव प्राचुर्यं "सैषानन्दस्येत्यादिनाऽग्रे प्रपञ्च्यत इति च प्रकरणपरामर्शिना मृजुबुद्धीनां सुगमम् । अतः प्राचुर्यार्थकत्वमेव युक्तमिति ।

यत्तु **शिवार्कमणिदीपिकायां** पूर्वपक्षग्रन्थाभिप्रायवर्णनप्रवृत्तेनापि तत्रैव हार्दाभिप्रायवता ततएव सिद्धान्तकथनावसर एतदपरिहृतवतोक्तम् । विकारार्थप्रायपाठानुसारादानन्दमयपदस्य जीवपरत्वनिश्चायकप्रमाणानुसाराच्चानन्दमयइत्यत्र मयड्विकारार्थः । पाश्चात्यमानन्दमीमांसादिकं तु ब्रह्मविदाप्नोतिपरमित्युपक्रान्तब्रह्मविद्याफलरूपमुक्तानुभाव्यब्रह्मानन्दोत्कर्षविषयं भविष्यति । अतएव तत्र ब्रह्मानन्दस्याकामहतश्रोत्रियसाधारण्यं 'आनन्दंब्रह्मणोविद्वान्निति मुक्तभोग्यत्वं च श्रूयत—इति । तन्न । "नैतद्युक्त" मित्यादिना पूर्वमुपन्यस्तस्यार्थस्यानेनापरिहृतत्वात्, । प्रत्युतास्सोपन्यासस्य पाश्चात्य मित्यादेस्तदनुकूलत्वमेव प्रतीमः । तथाहि—अत्र मुक्तानुभाव्य आनन्दो ब्रह्मसंबन्धीति त्वयापि ह्यभ्युपगतम्, उत्कर्षपदप्रयोगेणास्य निरतिशयत्वं च । इत्थंच ब्रह्मणोनिरतिशयानन्दवत्त्व एव "एतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्तीतित्वदुक्तप्रमाणेन मुक्तस्य निरतिशयानन्दानुभवस्सिद्ध्यति ब्रह्मानन्दसंबन्धिनःकाष्ठाप्राप्तप्राचुर्यरूपस्यनिरतिशयत्वस्य प्रतिपादनपरं प्रकरणमित्यभ्युपगमस्यावश्यकतया पूर्वोपन्यस्तपक्षइवात्रापि पक्षेवाक्यशेषगतानन्द मीमांसादिना मयटः प्राचुर्यार्थकत्वनिर्णयो निराबाधएव । एतदुक्तं भवति—आनन्दमीमांसादेर्ब्रह्मणोनिरतिशयानन्दवत्त्वतात्पर्यकत्वे मुक्तस्य ब्रह्मसंबन्धि तादृशानन्दानुभववत्त्वतात्पर्यकत्वेवा न कोपि विशेषः । पूर्वत्रेवात्रापिपक्षे प्रकरणस्यानन्दगतप्राचुर्यविवरणपरत्वसंभवेन त्वदुक्ताकांक्षादेस्सूपपादत्वादिति ।

नन्वानन्दमीमांसाया ब्रह्मानन्दनिरतिशयत्वे न तात्पर्यम्किन्तु मुक्तानु भाव्यानन्दनिरतिशयत्वमात्र इति चेन्न । मुक्तानुभाव्यानन्दनिरतिशयत्वसिद्ध्यर्थं तस्य तात्पर्यविषयत्वावश्यकत्वात् । प्रमाणान्तरेण तस्य तत्सिद्धिसंभवेन नात्र तद्विवक्षणीयामत चे न्मुक्तानन्देऽपि तत्संभवा त्प्रकरणं निर्विषय

मेव स्यात् । ततश्च पाश्चात्यमित्यादेः पक्षान्तरविरुद्धत्वाभावेन तथोक्तिरयुक्तैव विकारार्थप्रायपाठोपि प्रायपाठासिद्ध्युपपादनेन निरस्तः । यदुक्तमानन्दमय-पदस्य जीवपरत्वनिश्चायकप्रमाणानुसारादिति; तत्र किं तत्प्रमाणमिति विचार्यते । नह्यानन्दमयो जीवइत्यत्र शब्दोऽस्ति: नाप्यनुमानम्, अनुक्तेः । ननूक्तमेवानुमानं. "एवंव्यष्टिजीवाहंभावास्पदेषु । सिद्धेश्चे"त्यनेन । आनन्दमयो जीवः, जीवाहंभावास्पदोत्तरोत्तरसूक्ष्मार्थचरमार्थरूपत्वात्; यो यदहंभावास्पदार्थरूपः स सः, यथाभृगुवल्ल्याम्नातआनन्द इति प्रयोगस्यैव तत्र विवक्षितत्वादिति चेन्न । भृगुवल्ल्यां तत्र समष्टिशरीरादिपरत्वे प्रमाणाभावात् । हिरण्यगर्भस्य सर्वज्ञस्य स्वशरीरादिषु कदाचिदप्यात्मत्व-भ्रमपरम्पराया असंभवेन दृष्टान्तासिद्ध्या व्याप्तिग्रहायोगात् । तत एव तत्र तद्वुद्ध्यवतरणक्रमो ऽसिद्धः । तस्यापि कर्मवश्यत्वेन कदाचिद्भ्रमसंभवेपि न देहात्मभ्रमादिकमुपपद्यते । अत्यन्ताज्ञस्यैव तत्संभवात् । कदाचिदपि कार्यानुत्पादे योग्यतानिवेशस्याप्ययोगात् । हेतुश्चासिद्धः, विज्ञानमयपदस्य जीवपरताया स्थापितत्वेन तस्यैवतद्रूपत्वात् आनन्दमयस्याहंभावास्पदत्वाननु-भावाच्च । किंचात्र भृगुवल्ल्याम्नातानन्दस्य हिरण्यगर्भत्वाभ्युपगमश्चायुक्तः । कूटस्थोक्तिविरोधात् । तैस्तस्यसाक्षात्परब्रह्मपरत्वोक्तेः । मृदं प्रति घटस्येव हिरण्यगर्भं प्रति जीवस्य विकारत्वं न संभवतीति, तादृशविकार एव मयडितिच पूर्वमेवोक्तत्वादप्ययुक्तमिदम् । एवमानन्दमयस्य जीवत्वनिश्चा-यकानन्यथासिद्धप्रमाणविरहे, तस्य ब्रह्मत्वाङ्गीकारे बाधकलेशविरहे च सति 'आनन्दमयो ब्रह्म शरीरादिपञ्चमपर्यायस्थत्वात् भृगुवल्ल्याम्नातानंदवदि-त्यनुमानमपि तस्यब्रह्मत्वसाधनेनिरङ्कुशप्रसरमेव । त्वत्पक्षे मध्यकायानन्द-पुच्छब्रह्मणोरिवास्मत्पक्ष आनन्दमय-पुच्छब्रह्मणो रभेदाङ्गीकारेण त्वदुद्भावित-

सर्वदोषनिस्तारात् । नचेदमप्रयोजकमिति शङ्क्यम् । यद्यानन्दो ब्रह्म न भवेत् तर्ह्यस्य चरमपर्यायात्मकपञ्चमपर्यायस्थत्वमनुपपन्नंस्यात् । एतदपेक्षयापि सूक्ष्मस्यात्मान्तरस्य सत्त्वे पर्यायान्तरारम्भावश्यकत्वादित्यस्यैवानुकूलतर्कत्व-संभवात् । अत्र भूमविद्यान्यायावतारासंभवस्य वक्ष्यमाणत्वात् । तस्माच्छि-वार्कमणिदीपिकोक्तिरुपेक्ष्यैवेति सिद्धम् ।

यदप्युक्तं **परिमले**—"तत्प्रकृतवचने मयडि"ति सूत्रंद्वेधा व्याख्यातं शाब्दिकैः । प्रथमान्तात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात्स्वार्थे मयट् । प्रकृतशब्दस्य प्रस्तुतमात्रपरत्वेपि वचनग्रहणसामर्थ्या त्प्राचुर्यलाभ इत्येकं व्याख्यानम् । अन्नमयमित्यादि तदुदाहरणम् । प्राचुर्येण प्रस्तुतमन्न-मित्यादिरर्थः । प्रथमान्तात्प्रकृतमुच्यतेऽस्मिन्नित्यर्थे मयडित्यपरम् । अन्नं प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्यज्ञइत्यन्नमयोयज्ञइत्यादि तदुदाहरणम् । एतद्द्वि-विधमपि व्याख्यानं न वृत्तिकाराद्यनुकूलम् । प्रथमपक्षआनन्दमयपदस्य प्राचुर्येणप्रस्तुतानन्दमात्रपरत्वस्य द्वितीये प्रस्तुतानन्दवत्परत्वस्य च सिद्धावपि तदभिमतस्य प्राचुर्येण प्रस्तुतानन्दवत्परत्वस्यालाभात् । प्रथमेन्यपदार्थस्य द्वितीयेप्राचुर्यस्य च लाभोपायाभावात् । प्रकृतमुच्यतेस्मिन्नित्यर्थकतय वचनग्रहणस्य सामर्थ्योपक्षयादिति ।

तदत्यन्तहेयम् । आनन्दइत्यस्य तद्गुणसारत्वादिना आनन्दो ब्रह्मेत्यादाविवानन्दवदर्थकतया तदन्वितेन मयटा महोदारः परमकारुणिक इत्यादौ महत्त्वपारम्यादेरिव विशेषणान्वयिनः प्राचुर्यस्य बोधो निराबाध इति प्रथमव्याख्यानमपि वृत्तिकारानुकूलंभवेदेवेति । वस्तुतः "प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । आद्ये

प्रकृतमन्नमन्नमयम् । द्वितीयेऽन्नमयो यज्ञ" इति सिद्धान्तकौमुद्यां भट्टोजिदीक्षितै स्तत्सूत्रव्याख्याना द्वितीयव्याख्यानरीत्या ऽऽनन्दः प्राचुर्येण प्रस्तुत उच्यतेऽस्मिन्नित्यर्थे मयटस्संभवेन वृत्तिकाराद्यभिमतसिद्धि र्निष्प्रत्यूहैवेति । तत्र प्रथमं प्रस्तुतपदं प्राचुर्येण प्रस्तुतपरतया व्याख्यायानन्तरं वचनपदस्य भावेऽधिकरणे वा ल्युडिति द्वेधा व्याख्यानेन प्रकृतपदव्याख्यानस्य पक्षद्वयसाधारण्यं हिं स्पष्टं प्रतीयते । अन्यथा 'प्राचुर्येण प्रस्तुतं प्रस्तुतमात्रं वा प्रकृतम् । तस्य वचनं प्रतिपादनं भावे धिकरणे वा ल्युडिति हि व्याख्यायेत । क्रमान्वयसंभवात् । प्राचुर्यस्य द्वितीयपक्षानन्वयसूचनस्यावश्यकतया तस्य पक्षद्वयसाधारण्यप्रत्ययजनकलेखनस्यानुचितत्वाच्च । अतः पक्षद्वयेपि तदन्वयो ग्रन्थकृदभिमत इति निश्चीयते । अतएव मनोरमायां "प्रथमान्तात्प्रकृते द्योत्ये प्रत्यय इति" "अन्नं प्रकृत मुच्यत" इति च पक्षद्वयेपि प्रकृतशब्द एव प्रयुक्तः । अन्यथा द्वितीयपक्षे त्वंप्रस्तुतमित्येवोच्येत । अतएव तत्र "यत्तु प्राचोक्त"मिति प्राचीनमतमनूद्य खण्डनावसरे "वच्यर्थत्यागान्न्यूनता । अधिकरणस्य क्रियासांकाङ्क्षत्वेन तदध्याहारे गौरवं चेति मूलेदोष"इति दोषद्वयमेवोक्तम् न तु प्राचुर्यलाभोपायाभावेपि तत्कथनमिति प्रधानंदूषणम् । अतोऽवसीयते प्राचुर्यान्वयः पक्षद्वयेपि तदभिमत इति । प्राचुर्येण प्रस्तुतमुच्यते त्रेत्यर्थे प्रथमासमर्थान्मयडिति यदि स्यात्प्राचां व्याख्या तदा न कोपि दोष इति ह्येवमुक्त्या सूच्यते । अतएव "उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषण" मित्येतदीयामुक्तिं मनसि निधाय व्याख्यातृभिश्शब्दरत्नकारैः "वस्तुत उच्यमानता प्रकृत्यर्थस्य प्रायिकी । अतएव "निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपति" रिति सिद्धम् । भवत्या प्रचुर इति हि तत्रार्थ इत्याद्युक्तम् ।

अनेन च ग्रन्थेनोच्यमानतायाः प्रायिकत्वद्योतनाय प्राचां तदकथनमित्युक्तं भवति । अत्र प्रकृत्यर्थविशेषणद्वये प्रकृतत्वमभ्युपगम्योच्यमानत्वस्य प्रायिकत्वं प्रयोगानुसारेण प्रतिपाद्य महाकविप्रयुक्तमवनीपतिविशेषणं भवन्मयपदं भवतीप्रचुर इति व्याख्यातवतां द्वितीयेप्रकृत्यर्थविशेषणतया प्रत्ययार्थविशेषणतया वा प्राचुर्यमस्तीत्यभिप्राय इति सुव्यक्तमवसीयते ।

नन्वेवंसति कथं "यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढ" इत्यादिग्रन्थसामञ्जस्यसंपादनम्? तत्र प्राचुर्यलाभस्य वचनग्रहणमूलकत्ववर्णनात्, भावल्युडन्तपक्ष एव तत्संभवात्, पक्षान्तरे ऽन्यपदार्थभूतप्रकृत्यर्थाधिकरणलाभार्थतया तस्यावश्यकत्वेन तथावर्णनायोगादिति चेन्न— तद्ग्रन्थस्यपक्षद्वयसाधारण्यात् । तत्र रूढइत्येतदनन्तरं वचनशब्दश्च भावल्युडन्तस्स्वरस इत्यध्याहारः । अयंविशेषः = प्रस्तुतस्यप्राचुर्यवैशिष्ट्यं वचनशब्दस्याधिकरणल्युडन्तत्वं चेत्ययं विशेषः । यादृशस्य प्रकृतस्य = अत्र प्रकृतशब्दः प्रस्तुतमात्रपरः । यादृशस्य = प्राचुर्यविशिष्टस्य, अधिकरणरूपान्यपदार्थविशेषणस्य सतः प्राचुर्यविशिष्टस्य चेति व्याख्येयम् । ननु सूत्रावृत्तिः क्रियते तत्र प्रथमविषय एवमुच्यत इति चेत् आवृत्तावेव किंमानम्? अन्नमयोयज्ञइत्यादिप्रयोग एव मानमितिचेत् हन्त तर्हि तत्र मयटाऽधिकरणरूपार्थस्येव प्राचुर्यस्यापि प्रतीत्या द्वितीयपक्षेपि तत एव प्रयोगात् प्राचुर्यान्वयस्संभवतीति तावन्मात्रे कः प्रद्वेषः? अत उभयानुगुण्येनैवमेवव्याख्येयम् । अथवा-नाध्याहारः । व्याख्यानद्वयेपि प्रकृतशब्दात् प्राचुर्येण प्रस्तुतमित्यर्थलाभः कथमित्येव शङ्का; वचनग्रहणादितिच परिहारः । अयंभावः पूर्वव्याख्याने प्रकृतपदस्य प्रस्तुतमात्रपरत्वे वचनग्रहणं व्यर्थम् । द्वितीयेपि यदि प्रकृतपदं प्रस्तुतमात्रपरं स्यात्तर्हि प्रकृतत्वरूपं प्रस्तुतत्वं नाम

प्रस्तूयमानत्वमुच्यमानत्वमेवेति प्रकृतशब्देनैव तल्लाभादधिकरणमात्रबोधनस्या-वश्यकत्वेपि वचिधातुनिर्देशपुरस्परं वचनग्रहणं व्यर्थम् । अतो यादृशस्य प्राचुर्य—प्रस्तुतत्वरूपोच्यमानत्वोभयविशिष्टस्य प्रकृत्यर्थस्याधिकरणरूपान्य-पदार्थविशेषणीभूतस्य मयटा वचनं, तादृशग्रहणार्थमिति । अतएव प्रकृत पदेनैवोच्यमानत्वलाभं मनसि निधाय शब्दरत्नकारैः, "कथं पुनर्वचनशब्दे प्रकृत्यर्थस्य तच्छब्दार्थविशेषणत्वं ल्युडर्थस्याधिकरणस्य मयट्प्रत्ययविशेषणत्व मित्याक्षिप्य "प्रकृतइतिलुप्तसप्तम्यन्तम् । प्राचुर्येण प्रस्तुतत्वविशिष्टे वर्तमानात्प्रथमान्ताद्वचनाधिकरणे मयडित्यर्थ" इत्युक्त्वा "उच्यमानता प्रकृतता च प्रकृत्यार्थविशेषण" मिति ग्रन्थो निरूढः । एवञ्च वचेः-प्राचुर्यज्ञापनमेव प्रयोजनमिति सूचनायात्रशब्दरत्नवाक्ये वचनशब्द प्रयोग इति अत एवास्वरसादधिकरणस्येतिमूले दोषान्तरोक्तिः । अत एव लोके च मयट्प्रत्ययान्तैरन्नमयादिशब्दैः प्रकृतस्य प्राचुर्यमुच्यत इति मयडन्तस्य प्राचुर्यविशिष्टेर्थे लोकप्रसिद्धिं न्यासकृदुदाजहार । शेखर-कारैस्तु पक्षद्वयेपि प्राचुर्यान्वयं, तत्रैव वचनशैलीस्वारस्यं, तस्य वचनग्रहण-सामर्थ्यमूलकत्वे पूर्वोक्तरीत्या कथञ्चित् द्वितीयव्याख्याने सामर्थ्योपक्षय-संभावनां, सामर्थ्योपवर्णनार्थमप्यन्ततः प्रयोगस्य शरणीकरणीयतां च पर्या-लोच्यैव प्राचुर्येणेति प्रतीक मुपादाय लक्ष्यदर्शनमेव प्रमाणमिति वक्तुं व्याख्या नादिनि भाव इत्युक्तम् । अन्नमयं, अन्नमयो यज्ञ इत्युभयत्रापि लोके प्राचुर्यप्रतीत्या तदनुसारेण प्रस्तुतमात्रपरमपि प्रकृतपदं प्राचुर्यविशिष्टपरं व्याख्येयम् व्याकरणस्मृते रतिप्राचीनसुप्रसिद्धतत्तदर्थकशब्दप्रयोगानुगमा-यैव प्रवृत्तत्वा दित्याशयः । उपरिच 'अधिकरण' इति प्रतीकमुपादाय

"प्राचुर्येण प्रस्तुतान्नादिवचनात्प्रथमासमर्थादधिकरणे प्रत्यय इत्यर्थ" इति द्वितीयपक्षेर्थकथनेन कण्ठोक्त्या प्रदर्शित एव तत्पक्षेपि तदन्वयः। अत्राधिकरण इत्येव निर्देशाच्छब्दरत्नेवचनाधिकरण इत्यत्र वचनशब्दार्थे तात्पर्याभावो व्यक्तः। इत्थञ्च तत्प्रकृतवचने मयडिति सूत्रस्य सर्वशाब्दिकसंमतं द्वितीयं व्याख्यानं वृत्तिकाराद्युपयोग्येवेति सिद्धम्। अतो भवन्मय इत्यत्रेवानन्दमय इत्यत्राप्यानन्दप्रचुर इत्यर्थांगीकार स्सर्वथा निराबाध इति ध्येयम्।

अतएव **रत्नप्रभायामपि** द्वितायव्याख्यानेपि प्राचुर्यप्रतीतिननुसृत्य "विप्रमयोग्राम" इत्युक्तम्। तत्ररत्नप्रभावाक्यार्थस्तु प्रागेव दूषितः। एवञ्च तत्र **परिमले** "तदिति प्रथमासमर्थादित्यादिकल्पतरुग्रन्थस्य विकारशब्दादिति सूत्रोपात्तप्राचुर्यप्रतीत्युपयोगिप्रथमव्याख्यानं दर्शयतीत्यवतरणमपि मन्दम्। तथासति तद्ग्रन्थस्य भाष्यग्रन्थप्रतिकूलत्वापातात्। भाष्यस्य प्रथमव्याख्यानानुसारित्वे च प्रचुरानन्द इत्येव वक्तव्यतया आनन्दप्रचुरमित्युक्त्यसंभवः, अन्नमयो यज्ञ इति विशेष्यनिघ्नपुंल्लिङ्गोदाहरणतदर्थवर्णनादिविरोधश्च। भङ्ग्यन्तरेण वृत्तिकारानुसारि तद्भाष्य मप्यनुपादेयमित्येवास्माभिरुच्यत इति चेन्न; तथासति तव धाष्टर्यप्रसङ्गात्। 'भाष्यकृतोपि न तत्र तात्पर्यम्। अतएव योजनान्तरं प्रवर्तयिष्यती' ति चेन्न—तथासति प्रथमयोजनानुसारेणैवात्र सूत्रार्थस्य वर्णनीयतया 'प्रथमव्याख्यानं दर्शयतीत्युक्तेरसङ्गतत्वापातात्। एतदुक्तंभवति "प्राचुर्यार्थेपि मयटस्स्मरणात्। तत्प्रकृतवचने मयडिति हि प्रचुरतायामपि मयट् स्मर्यते। यथान्नमयो यज्ञ इत्यन्नप्रचुर उच्यते, एव मानन्दप्रचुरं ब्रह्म आनन्दमय उच्यते" इति हि भाष्यम्। अत्र प्रतिपादितोंशो भाष्यकृत्संमतोस्तु मावा। भाष्यमिदं तत्प्रकृतेति सूत्रद्वितीय-

व्याख्यानानुसारित्यत्र न विवादावकाशः । इत्थंचैतद्व्याख्यानप्रवृत्तकल्पतरु ग्रन्थस्य भाष्यानुगुण्येन द्वितीयव्याख्यानप्रदर्शनप्रवृत्ततायाः एवाश्रयणीयतया प्रथमव्याख्यानप्रदर्शनपरत्वकथनमुपेक्ष्यमेवेति । अपिच सूत्रोपात्तप्राचुर्यप्रतीत्युपयोगीत्यप्यसंगतम् । तत्सूत्रस्य तत्प्रकृतेति सूत्रद्वितीयव्याख्यानानुरोधित्वस्यैव स्फुटप्रतीतेः । "तद्धेतुव्यपदेशाच्च" "अस्मिन्नस्य च तद्योगं शास्ति" इति तच्छब्दपरामृष्टानन्दगतमेव हि प्राचुर्यं प्राचुर्यादित्यत्र स्वरसम् । सचानन्दो धर्मभूत इति प्रथमव्याख्यानानुसारित्वे आनन्दमयशब्दः प्रचुरानन्दरूपब्रह्मनिष्ठगुणपर एव भवतीति आनन्दमयोऽभ्यासादित्युक्तार्थविरोधप्रसंग इति प्रचुरानन्दवदर्थकत्वसंपादनाय द्वितीयव्याख्यानमेव समादृतमिति हि स्वरसत एव प्रतीयते । अपिच 'आनन्दमय इति प्राचुर्यार्थतो मयट उपपादिता', 'आनन्दमयपदेपि प्रधानदुःखानुवृत्तिः,' 'नचप्राचुर्यार्थत्व' मित्यादिवाक्यानां पूर्वोक्तभाष्यादेश्च स्वानभिमतपरकीयपक्षाभिप्रायकत्ववर्णनं नैव स्वरसम् । तस्मात्सूत्रकारभाष्यकारयो र्भामतीकल्पतरुकारयोश्च तत्प्रकृतसूत्र द्वितीयव्याख्यानेपि प्रकृत्यर्थविशेषणतया तद्विशेष्यतया वा प्राचुर्यान्वयोऽस्तीत्येवाशयो ऽवगम्यत इति सिद्धम् ।

अत्रेदमवधेयम् :—तत्प्रकृतेति सूत्रमावर्तते । तत्र प्रथमस्य प्रचुरार्थबोधकात्प्रथमान्तात्स्वार्थे मयडित्यर्थः । द्वितीयस्य तु इदं प्राचुर्येणविशिष्टमुच्यतेऽस्मिन्नित्यर्थे प्रथमान्तान्मयडिति, प्रथमान्तात्प्राचुर्यविशिष्टाधिकरणरूपान्यपदार्थे मयडिति च द्वेधार्थः । तत्र प्रथमे अन्नमयमित्यस्य प्रचुरमन्नमित्यर्थः । द्वितीयप्रथमे अन्नमयोयज्ञइत्यस्य प्रचुरोच्यमानान्नाधिकरणं यज्ञ इति, उच्यमानत्वस्य प्रायिकत्वपक्षे प्रचुरान्नाधिकरणं यज्ञ

इति चार्थः। अत्र पक्षेऽधिकरणमात्रे प्रत्ययः। प्राचुर्यं प्रकृत्यर्थो विशेषणतया। द्वितीयद्वितीये त्वन्नवृत्तिप्राचुर्यविशिष्टो न्नाधिकरणं यज्ञ इति। अत्र 'अर्थात्प्राचुर्यस्य प्रकृत्यर्थसंबन्धित्वप्रतीतिः। अधिकरणतायां प्रकृत्यर्थस्य निरूपितत्वसंबन्धेनान्वय इत्येकः पक्षः। प्रकृत्यर्थस्याधेयत्वसंबन्धेन प्राचुर्येऽन्वयः। अर्थादधिकरणतायाः प्रकृत्यर्थनिरूपितत्वप्रतीतिरित्यपरः। उभयत्राप्यन्नं प्रस्तुतमन्न प्राचुर्यविशिष्टेऽस्तीति तदर्थः। एतत्पक्ष एव स्वारस्यं सूत्रभाष्ययोः। प्राचुर्यस्य मयडर्थतायास्तत्र प्रतीतेः। यद्वाऽत्र पक्षे प्राचुर्येऽधिकरणेच खण्डशक्तिरभ्युपगम्यते। तत्र प्रथमं प्रकृत्यर्थस्य प्रत्ययार्थे प्राचुर्ये आधेयत्वसंबन्धेनान्वयः। तस्य स्वाश्रयवत्त्वसंबन्धेनाधिकरणेऽन्वयः। प्रकृत्यर्थस्य पुनरपि निरूपितत्वसंबन्धेनाधिकरणताश्रयवृत्त्यधिकरणतायामन्वयः। तथाच स्वाश्रयवत्त्वसंबन्धेनान्नवृत्तिप्राचुर्यवदन्नाधिकरणं यज्ञ इति बोधः। अथवाधिकरणपदार्थघटकाधिकरणतायां स्वाश्रयनिरूपितत्वसंबन्धेन प्राचुर्यान्वयः। प्राचुर्य एव प्रकृत्यर्थान्वयः। अन्ननिष्ठप्राचुर्याश्रयनिरूपिताधिकरणतावानित्युक्ते न्नाधिकरणत्वं सिध्यत्येवेति। सर्वथा प्रचुरान्नाधिकरणं यज्ञ इति द्वितीयप्रथमद्वितीययोः फलितोऽर्थः।

इदंत्वत्र सूक्ष्मेक्षिकया द्रष्टव्यम्। भवन्मय इत्येतत् भवत्या प्रचुर इति व्याख्यातवतां शब्दरत्नकाराणां-तत्र प्राचुर्यस्य प्रत्ययार्थत्वप्रतीतिस्वारस्य-परामर्शे पूर्वोक्तरीत्या तस्य प्रत्ययार्थविशेषणत्वसंभवेन मूलकारै रभसकृतत्वे-नोक्तं प्रचीनव्याख्यानमपि निर्वोढुं शक्यम्। प्राचुर्यसहितमधिकरणं मयडर्थ इति पक्षे तस्य व्याख्यानस्याधिकरणरूपप्रत्ययार्थं प्रति प्राचुर्यस्य विशेषणतया प्रत्ययार्थत्वमित्यर्थकताया वक्तुं शक्यत्वादित्यभिप्रायोऽस्तीत्यवगम्यत इति।

एवं प्राचुर्यस्य पूर्णत्वरूपत्वे ‘प्रचुर इति मयडर्थः प्राचुर्ये च निरूपितत्वसंब न्धेन प्रकृत्यर्थान्वय इत्यपि द्रष्टव्यम् ।

इदमप्यत्रावधेयम्:—उक्तद्वितीयव्याख्यानरीत्या प्राचुर्यस्य प्रकृत्यर्थ-विशेषणत्वे वा विशेष्यत्वे वा सर्वथापि न मात्रयापि तात्पर्ये वैलक्षण्यप्रतीतिरि-त्यतएव भट्टोजिदीक्षितानां प्रकृत्यर्थविशेषणत्ववर्णनं अन्यैश्च विशेष्यत्ववर्णन मुपपद्यते । अन्यथा मतिवैलक्षण्ये एकतर एव पक्ष स्सर्वैराश्रितस्स्यात् । अतश्च ‘विशेषणत्वे समानाधिकरणसजातीयाल्पत्वापेक्षा, अन्यथा पुनरन्य-थेति’ रत्नप्रभाकल्पन मप्पयदीक्षितवर्णनञ्च श्रद्धामात्रविजृम्भितं शब्दविदसं-मततमर्मिति ।

यदप्युक्तं निगमनावसरे आनन्दमयस्य ब्रह्मत्वे निर्विशेषब्रह्मप्रकरण विरुद्धप्रियशिरस्त्वादियोगस्यापरिहार्यतया पुच्छब्रह्मण एव परमात्मत्वमङ्गीकार्य मिति; तदपि न; तस्य प्रकरणस्य स्वाभाविकबहुविधधर्म प्रतिपादनपरत्वदर्श नेन निर्विशेषपरत्वासंभवस्य प्रागेवोक्तत्वात् । यस्त्वयं वाक्यशेषो “यतो वा चोनिवर्तन्त” इति, स तावद्ब्रह्मणो निरतिशयानन्दवत्त्वमेव प्रतिपादयतीति न ततो निर्विशेषप्रतीतिः ।

यत्तूक्तं न्यायरक्षामणौ भेदव्यपदेशाच्चेतिसूत्रे—प्रकरणमिदं निर्वि-शेषब्रह्मप्रतिपादनपरमेव । ब्रह्मविदाप्नोतिपरमित्युपक्रमेपिब्रह्मभावापत्तिरे वोच्यते, नभेदगर्भा ब्रह्मवित्कर्तृकपरकर्मकप्राप्तिः । वृहदारण्यके “स यदाह असतो मा सद्गमयेति; मृत्युर्वा असत्, सदमृतं, मृत्योमाऽमृतं गमय, अमृतं मा कुर्वित्त्येवैतदाह” इत्यत्र मृत्यो स्सकाशान्मामसृतं गमयेत्यर्थकस्यामृतंगमयेत्यन्तस्यामृतंमाकुर्विति सत्पदबोध्यामृताभेदाभिव्यक्त्यर्थ्र कतया श्रुत्यैव व्याख्यानदर्शनेन मोक्षप्रतिपादकप्रकरणेषु सर्वत्र ब्रह्मभावापत्ति

रूपमुक्तिप्रतिपादनपरतायाः एव निर्णयात् । एवं ब्रह्मविदस्तद्भावापत्तिमुक्त्वा सत्यं ज्ञान मित्यादिना स्वरूपलक्षणतस्तत्स्वरूपं निर्धार्य योवेदेत्यादिना हृदय-गुहायां जीवरूपेण निहितं ब्रह्म यो जीवाभिन्नं वेदेति वेदनं जीवाभेदविषयं प्रदर्श्य तत्फलभूतब्रह्मभावापत्तेर्निरतिशयपुरुषार्थरूपत्वं सोऽश्नुत इत्यादिना प्रतिपाद्यते । अत्र निर्विशेषप्रतिपादनोपक्रमानुसारात्, "सोऽश्नुतेसकला-न्कामानक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशय" इत्युप-बृंहणानुसाराच्च सोऽश्नुतइत्यादेरयमेवार्थः । सः ब्रह्मवित्, ब्रह्मणा ब्रह्मरूपेण, सह युगपत्, कामानश्नुत इति कामशब्दस्स्रक्चन्दनादिसंबन्धाभिव्यङ्ग्य, सुखवाची । ब्रह्मरूपेण स्वाभिन्नमखण्डानन्दमनुभवन् तत्कणिकायमानानि सर्वाण्यपि तानि तानि सुखान्यनुभवत्येवेति सर्वान्कामानश्नुत इत्युच्यते । अत्र ब्रह्मणासहेत्यन्वयस्य 'सोऽश्नुते+सहेत्यध्येतृसंप्रदायागतवाक्यविच्छेद-विरुद्धत्वाद्ब्रह्मणोऽप्राधान्यप्रसंगाच्च हेयतयोक्तएवार्थो वक्तव्यः । तदनन्तरं पूर्वोक्तब्रह्मलक्षणानन्त्यान्तर्गतं वस्तुपरिच्छेदराहित्यरूपमानन्त्यं प्रपञ्चस्य प्रतिपन्नोपाधिगतनिषेधप्रतियोगित्वरूपमिथ्यात्वेनोपपादयितु मात्मनआकाश-इत्यादिना ब्रह्मणो जगदुपादानत्वप्रतिपादनेन तत्र प्रपञ्चाध्यारोपः क्रियते । एवमारोपितस्य प्रपञ्चस्य यतोवाचोनिवर्तन्तइत्यपवाद उपदिश्यते । अस्य-चायमर्थः । ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखितया सन्घट स्सन्पट इत्यादि-प्रकारेण प्रवृत्तेनान्तःकरणेन सह तत्र प्रवृत्ता घटपटादिशब्दा अप्यखण्डाकार-पर्यन्तमप्राप्य अथातआदेशो नेति नेतीत्यादिश्रौतबाधे सति निवर्तन्ते, यथाशुक्तिकायामध्यस्तरजततादात्म्योल्लेखितयाप्रवृत्तेन मनसा सह रजतमिद-मितिव्यवहारश्शुक्तित्वमप्राप्य नेदं रजतमिति बाधे सति निवर्तते, तद्वदिति । आनन्देयत्तारूपपरिच्छेदविषयवाङ्मनसनिवृत्तिपरत्वन्त्वस्य न शक्यते

वक्तुम् । अप्राप्य निवर्तन्त इत्युक्त्या प्रवृत्तयोस्तयो निवृत्तिरभिधीयते, नत्वप्रवृत्तिरेवेति प्रतीतेः । ततश्चानन्देयत्ताविषयकस्य लौकिकस्य वैदिकस्य वा कस्यचिद्वाक्यान्तरस्य प्रवृत्तस्यादर्शना त्प्रकृतस्य च शतगुणितोत्तरत्व-प्रतिपादकस्य प्रवृत्तत्वादेव निवृत्त्यसंभवाच्च तद्विषयकस्य तत्र प्रवृत्तस्यार्धपथे निवृत्तिप्रतिपादनपरताया दुर्घटत्वात् । मम तु घटस्सन्नित्यादिव्यवहारव्यक्तेः प्रवृत्ताया निवृत्त्यसंभवेपि तत्सजातीयव्यवहारप्रवाहस्याऽऽसंसृत्यावर्तमानस्य श्रौतवाधे सति निवृत्तिसंभवान्नायंदोषः । अपिच वाच इत्यस्यासंकोचा त्सर्वविषयकत्वे संभवत्यानन्देयत्ताविषयवाङ्मात्रपरत्वेन संकोचोपि न युक्तः । तस्मादस्य वाक्यस्य ब्रह्मानन्देयत्ताविषयकवाङ्मनसनिवृत्तिप्रतिपादनमुखेन ब्रह्मणोऽनवधिकातिशयानन्दवत्त्वप्रतिपादनपरत्वासंभवा दुक्तरीत्या ब्रह्मणि तस्माद्वाएतस्मादित्यादिनाध्यस्तप्रपञ्चापवादोपदेशरूपत्वमास्थेयमिति, अस्य प्रकरणस्य निर्विशेषपरत्वमविचाल्यमिति ।

तदिदमत्यन्तहेयम् । आमूलाग्रं तस्य प्रकरणस्य बहुविधविशेष-प्रतिपादनपरत्वस्यैव प्रतीतेः । प्रपञ्चाध्यारोपापवादगन्धस्यानाघ्रातत्वाच्च । तथाहिः—उपक्रमे तावद् ब्रह्मविदाप्नोतिपरमिति ब्रह्मोपासकस्य परप्राप्ति-श्श्रूयते । तत्र ब्रह्मविदित्यनेनोपास्योपासकयोः परमाप्नोतीत्यनेन प्राप्य-प्रापकयोश्च परस्परं भेदः प्रतीयते । नचायं भेदः काल्पनिक इति युक्तं वक्तुम् । तस्य तथात्वसूचकक्लेशाभावात् । यत्तु बृहदारण्यकवाक्यानुसरणम् ; तदयुक्तम् । "निरञ्जनः परमं साम्यमुपैति," "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम" "यथा नद्यः+उपैति दिव्यम्" "सायुज्यमन्ये स तु मोक्ष उक्तः" "इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत" "सामरस्यं हि सायुज्यं वदन्ति

ब्रह्मवादिनः" "मम साधर्म्यमागताः" "परेण परधर्मी च भवत्येष समेत्यवै । विशुद्धधर्मा शुद्धेन—" "जगद्व्यापारवर्जं" "भोगमात्रसाम्यलिङ्गाच्चे"ति श्रुतिस्मृतिसूत्रे मुक्तिदशायां मुक्तस्य ब्रह्मणात्यन्तसादृश्यमात्रस्य वोधनेनोक्त-बृहदारण्यकवाक्यस्य तद्विरुद्धब्रह्माभेदबोधकत्ववर्णनस्य हेयत्वात् । अनन्यथासिद्धवचनजातमनादृत्यान्यथासिद्ध्यर्हकतिपयवचनानुसारस्य न्याय-विरुद्धत्वाच्च । नहि पूर्वोक्ताश्श्रुतयो न्यथा नेतुं शक्यन्ते । साम्यसामरस्य-सायुज्यशब्दानामैक्यार्थकतायाः कथमप्ययोगात् । अतोऽस्यवाक्यस्यान्यार्थक-त्वमेव वक्तव्यम् । असतो मा सद्गमय मृत्योर्माऽमृतंगमयेत्यनेन मृत्योस्संसारान्माममृतं ब्रह्म गमय प्रापयेत्युक्ते, यदि वैदिकपुत्राणां संसारमण्डलातिक्रमणपूर्वकं देशविशेषवर्तिब्रह्मसमीपप्राप्तिवदियमपिप्राप्ति ब्रह्मसमीपगमनरूपा, तदा तेषामिवास्यापि स्वाभाविकगुणाष्टकाविर्भावो न स्यात् पुनरावृतिश्च स्यादिति शङ्का जायत इति तन्निरासायोक्तमर्थंविवृणोति अमृतंमाकुर्विति । माममृतं-मुक्तंकुर्वित्यर्थः । इत्थंचासतोमासद्गमयेत्यस्य मृत्योर्मामृतंगमयेत्यर्थः माममृतंमुक्तंकुर्वितियावदित्युक्तंभवति । तथाचात्रा-स्मच्छब्दसमानाधिकरणममृतपदं न ब्रह्मवाचि । अपितु मुक्तवाचि । येनाहंनामृतास्यां किमहंतेनकुर्या मित्यादाविव तदर्थकताया उचितत्वात् । नहि तत्र ब्रह्मपरत्वं शक्यशङ्कम्, अमृतेति स्त्रीलिङ्गनिर्देशात् । किञ्चात्रा-मृतपदस्य ब्रह्मपरत्वे प्रार्थयमानस्य पुरुषस्य ब्रह्माभेदस्य नित्यसिद्धतया कुर्विति तस्य कर्तव्यत्वप्रार्थना न घटते । लक्षणयाऽविद्यानिवृत्त्यभेदाभिव्य-क्त्यादिप्रार्थनापरत्वं तु लक्षणांविनैव निर्वाहसंभवादयुक्तम् । अमृतंगमयामृतं-कुर्वित्यमृतपदयोरर्थवैरूप्यन्तु अर्थान्तरे लक्षणाप्रसंगात्प्रमाणान्तरविरोध-प्रसंगाच्च सह्यम् । अथवाऽसतोमासद्गमयेत्यत्र सच्छब्द "स्सद्भावे साधुभावे-

चेत्युक्तरीत्योत्कृष्टवाचीस न्प्रकृते सर्वकर्मविनिर्मोकपरः। तद्विरोधिवाचकोऽसच्छब्दश्च कर्मसंबन्धपरः। अतएव मृत्युर्वाअसत् सदमृतमिति विव्रियते। मृत्युशब्दो हि कर्मसंबन्धरूपसंसारपरत्वेन प्रसिद्धः। अमृतशब्दश्च मरणोपलक्षितसर्वसांसारिकदुःखनिवृत्तिरूपमुक्तिपरो भवितुमर्हति। ततश्च कर्मसंबन्धरूपसंसारान्मासुद्धृत्य सर्वकर्मनिवृत्तिरूपमुक्तिं प्रापयेतिप्रथमयजुषोर्थ इति मयदाहेतिविवरणवाक्यार्थः। इयमेवप्रार्थनोत्तराभ्यामपियजुर्भ्यां पुनःपुनरादरातिशयेन क्रियते। तत्र सदसच्छब्दाभ्यां ज्योतिस्तमश्शब्दाभ्याममृतमृत्युशब्दाभ्यां च प्राप्यनिवर्त्ययोरुक्त्योत्तरोत्तरमर्थप्रतिपत्तेस्स्पष्टता च संपाद्यते। अत्र च पक्षे नार्थवैरूप्यमप्यमृतशब्दस्य। अमृतंगमयेत्यत्रामृतस्यैषसेतुरित्यत्रेव धर्मप्रधाननिर्देशो वा भावप्रत्ययान्तत्वं वा। माअमृतमित्यत्र कर्तृप्रत्ययान्तत्व मितायानेव भेदः। सोपि समभिव्याहृततत्तत्पदमहिम्नेति न कोपि दोषः। यद्वा प्रथमद्वितीयमन्त्रौ देहात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्तिप्रार्थनापरौ। तृतीयस्तु तयोर्निवृत्तयोस्संसारनिवृत्तिपूर्वकब्रह्मप्राप्तिप्रार्थनापरः। तत्रासत्तमश्शब्दौ देहात्मभ्रमस्वतन्त्रात्मभ्रमपरौ। सज्ज्योतिश्शब्दौ देहातिरिक्तात्मास्तित्वज्ञानजीवातिरिक्तपरमात्मास्तित्वज्ञानपरौ। अत्र पक्षे ऽमृतंमाकुर्वित्यत्रामृतपदस्यतादृशज्ञानवत्परत्वं द्रष्टव्यम्। अथवा निषिद्धकर्मनिवृत्तिपूर्वकविहितकर्मप्रार्थनापरः प्रथममन्त्रः। फलान्तरसाधनकर्मनिवृत्तिपूर्वकमोक्षसाधनकर्मप्रार्थनापरो द्वितीयः। तृतीयस्तु संसारनिवृत्तिपूर्वकमोक्षप्रार्थनापरस्स्पष्टएव। अत्र पक्षे यथायथं पदार्था ऊह्याः। एवं बहुधार्थवर्णनसंभवेनान्यथासिद्धवाक्यलेशगतममृतशब्दास्सच्छब्दसामानाधिकरण्यमात्रमादाय बहुप्रमाणविरुद्धस्य लक्षणादिदोषग्रस्तस्यैतद्वाक्येस्वपूर्वैःकैश्चिदप्यनाश्रितस्य जीवब्रह्माभेदपरत्वस्य वर्णनं श्रद्धातिशयविजृम्भितमेवेति।

अपिच तद्व्याख्यायामैदम्पर्येण प्रवृत्तैश्श्रीशङ्कराचार्यैरपि तद्वाक्यमन्यथैव व्याख्यातमित्यतोपि तस्य त्वदुक्तार्थः परिहरणीयः। तत्र तैरसच्छब्दम-च्छब्दतमश्शब्दज्योतिश्शब्दानां क्रमेण स्वाभाविककर्मविज्ञानशास्त्रीयकर्म-विज्ञानाज्ञानज्ञानपरत्वंह्युक्तम्, "स्वाभाविककर्मविज्ञाने मृत्युरित्युच्यत"-इत्यादिना। तृतीयो मन्त्रस्समुच्चयेनोक्तार्थद्वयप्रतिपादक इतिचोक्तं पूर्वयोरेवे-त्यादिना। तत्र ब्रह्माभेदगन्धो नाघ्रातोपि। तत्र सदादिपदवाच्यतया पूर्व योर्थ उक्त स्तद्वत्परस्त्वस्यैवास्मच्छब्दसमानाधिकरणामृतशब्दस्य विवक्षणीय-तया ऽमृतपदयोरर्थवैरूप्यं च स्फुटम्। किंच तत्रस्यामृतशब्दस्य ब्रह्मपरत्व-मंगीकृत्य मां ब्रह्माभिन्नं कुर्वित्यर्थवर्णनेपि न त्वदभिमतसिद्धिः। "तस्मिन्नेव यजमानास्सैन्धवघनइव लीयन्ति। एषावै ब्रह्मैकता नाम। अत्रहि सर्वे कामा स्समाहिताः" इति मैत्रायणीयोपनिषद्वाक्येन ब्रह्मणा जीवस्यैक्यप्रतिपादकानां मोक्षप्रकरणगतश्रुतीनां तेन तस्य परमसाम्यप्रति-पादकताया एव निर्णयात्। यजमाना एव यज्ञेनदानेनेत्युक्तरीत्योपासनाङ्ग-भूतयज्ञादिकं कुर्वाणा एव। सैन्धवघन इव—उदके प्रास्तस्सैन्धवखण्ड इव। "स यथा सैन्धवखिल्य उदके प्रास्त" इतिवाक्यान्तरानुसारात्। तस्मिन् परमात्मति लीयन्ति—लीयन्ते। पदव्यत्ययश्छान्दसः। ब्रह्मैकता नाम ब्रह्म वेद ब्रह्मैव भवतीत्यादिषु या ब्रह्मैकता प्रसिद्धा सा तावत्। एषावै—इयमेव, उदके सैन्धवखण्डलयसमानो योऽयं ब्रह्मणि जीवलय स्तद्रूपैव। हि यस्मात्कारणा दत्र परमात्मनि सर्वेकामाः कल्याणगुणास्समाहिनाः सम्यगाहिताः नित्यतयास्थिताः, तस्मादुक्तरूपैव जीवस्य ब्रह्मैकतेत्यन्वयः। अयं भावः ब्रह्मणस्स्वाभाविकनिरतिशयसार्वज्ञादिकल्याणगुणसागरतया जीवस्य च मुक्त-स्यापि दोषसंबन्धार्हतया सार्वज्ञादीनामपितत्संकल्पायत्तत्वेन सातिशयतया

निरतिशयगुणवद्भेदस्य तेत्रासंभवेन जीवब्रह्मणोरभेदबोधकतयाऽऽपाततः-प्रतीयमानवाक्यानां न तत्र तात्पर्यमाश्रयितुं शक्यम् । अपित्वबाधितार्थक-प्रमाणान्तरानुसारात्परमसाम्य एवेति । अत्र मोक्षप्रकरणे प्रतीयमानं ब्रह्मैक्यमनूद्य लयविशेषरूपत्वं विधीयत इति वचनव्यक्त्यैव स्फुटम् । सैन्धवखण्डस्योदकेलयश्च न स्वरूपैक्यरूपः । तथासत्याचमने लवणोपलम्भ-विरोधात् । तोलने परिमाणाधिक्योपलम्भविरोधाच्च । अपितु विभागानर्ह-संयोगविशेषरूपः परमसाम्यपर्यवसन्नः । इत्थञ्चोक्तश्रुतिबलेन त्वदुपात्त-बृहदारण्यकवाक्यस्यापि परमसाम्यपरत्वस्यैवाभ्युपगन्तव्यतया तदनुरोधेन ब्रह्मविदाप्नोतीत्यस्यैक्यपरत्ववर्णनमसंगतमेव । तस्माद्बृहदारण्यकवाक्यस्या-न्यार्थकत्वेन ऐक्यपरत्वेप्युक्तरीत्या भेदेसत्येव लयविशेषात्मकैक्यपरत्वस्यैवा-वश्यकत्वेन च तदादाय ब्रह्मविदाप्नोतिपरमित्यत्र स्वाभिमतार्थसाधनप्रत्याशा मृन्मयीं नावमारुह्य सागरतरणप्रत्याशैव । तदनुगुणोपक्रमानुसारेण तदुत्तर-प्रकरणार्थवर्णनमपि तया सागरमतिलङ्घ्य परत्रतीरे द्रव्यार्जनमेवेति सिद्धम् ॥

अथापि तदुक्तं प्रकरणार्थं प्रत्येकमपि दूषयामः । यदुक्तं यो वेद निहितमित्यनेन ब्रह्मज्ञानं जीवाभेदविषयमुपदिश्यत इति तदसंगतम् । अभेदविषयकत्वं हीदं किं स्वस्वारस्या दुत प्रमाणान्तरस्वारस्यात् ? नाद्यः ब्रह्मविदितिमन्त्रोक्तवेदनविवरणाय प्रवृत्ते योवेदेतिब्राह्मणे यत्पदेन मुमुक्षो-र्ब्रह्मविद एव जीवस्य परामर्शनीयतया तस्मात्तत्कर्तृकवेदनकर्मत्वेन निर्दिष्ट-प्रक्रान्तपरपदवाच्याभिन्नानिहितपदार्थस्य सुस्पष्टं स्वाभाविकभेदप्रतीत्या तयोरैक्यासंभवेन ज्ञानस्य जीवाभेदविषयकत्वायोगात् । नान्त्यः, जीवब्रह्म-भेदस्य स्वाभाविकस्यैव "नित्यो नित्यानां" "ज्ञाज्ञौ द्वावजौ" इत्यादि-प्रमाणसहस्रसिद्धत्वात् । तत्र स्वारस्यादुपाधिकथनाभावाच्च भेदस्य तत्त्वसिद्धेः ।

प्रमाणान्तरविरोधं स्वारसिकभेदप्रतीतिविरोधञ्चानादृत्य स्वेच्छयार्तद्विषयकत्व-कल्पनं न प्रामाणिकहृदयमावर्जयितुमलम् ।

यदप्युक्तं ब्रह्मरूपेण ब्रह्मभूतस्सन् युगपदखण्डानन्दमनुभवन्सकलचेतन-सुखान्यनुभवतीति सर्वान्कामानश्नुत इत्युच्यते उपक्रमवशादुपबृंहणवशाच्चेति, तत्रोपक्रमरहस्यं पूर्वमेवोद्घाटितम् । उपबृंहणं तु विचार्यते । सोऽश्नुतेमक-लानितिवचनं तावत्पूर्वैरसंप्रतिपन्नैः कुत्राप्यनुदाहरणादविश्वसनीयमेव । यदि विश्वसनीयमित्याग्रहः, तदापि नास्य सोऽश्नुतइति श्रुत्युपबृंहणत्वसंभवः। परमेव्योमन्निपरिचिताब्रह्मणासह सर्वान्कामानश्नुत इत्यन्वयात्परमव्योमश-ब्दिताप्राकृतदेशविशेष एव ब्रह्मणा सह तद्गुणानुभवस्यात्रफलत्वप्रतिपादना-वगमेन भवद्रीत्यात्रैव तदनुभवप्रतिपादकजीवन्मुक्तपदघटितवचनस्यैतच्छ्रुत्युप-बृंहणत्वदौर्घट्यात् । नन्वौपनिषदेशाङ्करे परमेव्योमन्नित्यस्य पूर्वेणान्वयमङ्गी कृत्य योजनात्रयमुक्तम् । तत्र निगूढज्ञानज्ञेयज्ञातृकत्वेन गुहापदवाच्यायां बुद्धौ यदनुगतं परमव्योमाव्याकृताकाश स्तस्मिन्निहितं योवेदेत्येका योजना । निगूढसर्वपदार्थकत्वेन गुहापदवाच्येऽव्याकृताकाशे निहितमिति सामानाधिक-रण्येन द्वितीया । हृदयावच्छिन्ने भूताकाशे या गुहा बुद्धि स्तस्यां साक्षि-तया निहितमिति तृतीया । इत्थंच परमेव्योमन्नित्यस्योत्तरत्रान्वयानङ्गी-कारेण न तद्वचनस्यैतच्छ्रुत्युपबृंहणत्वानुपपत्ति रिति चेन्न । "सोध्वनःपारमा-प्नोति—तद्विष्णोःपरमंपदं सदापश्यन्तिसूरयः" "त्रिपादस्यामृतंदिवि" इत्यादिश्रुतिभि स्तदुपबृंहणभूताभिः "ब्रह्मणस्सदनादूर्ध्वं तद्विष्णोःपरमंपद" मित्यादिस्मृतिभिश्चाप्राकृतदेशविशेषस्य, दिव्यमङ्गलविग्रहविशिष्टत्वेन ब्रह्मण स्तद्वर्तित्वस्य, तादृशदेशविशेषवर्तिसकलमंगलगुणविशिष्टब्रह्मप्राप्तेर्मुक्तिरूप-त्वस्य, तत्रतत्र प्रमाणवचनेषु प्रयोगवशात्परमव्योमशब्दस्याप्राकृतदेशविशेष-

वाचिन्वस्य च निरवाधं सिद्धा वृक्तरीत्यार्थवर्णनस्यैवोपादेयतया तस्य पूर्वेणा-न्वयमङ्गीकृत्यार्थवर्णनस्य हेयत्वात् । किंच गुहापदस्य बुद्धिपरत्वमत्यन्ता-स्वरसम् । "गुहाहितं गह्वरेष्ठं पुराणम्" "दहरं पुण्डरीकं वेश्म दहरो-ऽस्मिन्नन्तर आकाशः" "गुहां प्रविष्टावात्मानौ हि तद्दर्शना" दित्यादिभिः परमात्मनो हृदयगुहावर्तित्वोक्तेस्तदेकरूप्यादत्रापि तदर्थकत्वमेव युक्तमिति तत्परित्यागो न युक्तः । अपिच प्रथमपक्षेऽव्याकृताकाशस्य बुद्ध्यनुगतत्व-विशेषणं व्यर्थम् । एवमनन्तरपक्षयोरपि दूषणमूह्यम् । एवं हार्दाकाशपरत्वे व्योम्नः परम इति विशेषणमपि न संगच्छते । अतस्सर्वथोत्तरवाक्यएव परमेव्योमन्नित्यस्यान्वयआवश्यक इति न भवत्परिकल्पितवचनस्य प्रकृत-श्रुत्युपबृंहणत्वसंभवः । किंच विदितब्रह्मरूपेणेत्यप्यनन्वितम् । विदितब्रह्म-रूपस्मन्निति त्वदभिमतार्थे तृतायाया दुर्घटत्वात् । एतादृशस्थलेऽभेदेतृतायाया अनुशासनाभावात् । नहि तन्तवः पटेन शरीरमाच्छादयन्तीति प्रयोगो दृष्टचरः । पटरूपेणेतिप्रयोग उचित इति चेन्न, ब्रह्मणि रूपपदवाच्याव-स्थानङ्गीकारेण प्रकृते तथार्थवर्णनायोगात् । एतदुपबृंहणीयत्वेन त्वदभि-मतश्रुतौ रूपपदाश्रवणात्तदनुरोधेनोपबृंहणपदस्यापि तदर्थकत्वस्यैवोचित-तया 'ब्रह्मणो रूपं तद्वृत्तिधर्मस्तेनेत्यर्थवर्णनसंभवाच्च । एतेन 'विदितब्रह्मरूपेणे'ति विपश्चिता ब्रह्मणेतिचेत्थंभूतलक्षणेतृतीयेत्यप्यपास्तम्। 'जटाभिस्तापसः' 'श्वेतच्छत्रेणराजा' इत्यादौ तदुदाहरणेऽभेदबोधा-दर्शनात्। ज्ञाप्यज्ञापकभावस्थले ज्ञापकवाचकादेवोक्ततृतीयायाश्शास्त्रस्थैरभ्युप-गमाच्च । तस्मात् सहेत्यनेनान्वयाभावेऽपि ब्रह्मणेतितृतीयाबलेनाश्नुवानापेक्षया ब्रह्मणो भेद एव व्यक्त इति, उपबृंहणवचनमपि तदनुरोधेनैव नेयम् ।

अपिचाखण्डानन्दरूपब्रह्मतापत्तिर्हि तवमते साक्षान्मुक्तिः । तस्यां च दशायां कस्यचिदपि भेदस्याभावेनाखण्डानन्दरूपब्रह्मणएवानुभवविषयत्वासंभवे कथं कामपदवाच्यबहुविधसुखानां तत्त्वं संभवदुक्तिकम् । ब्रह्मानन्दापेक्षया तेषां कणिकात्वात्तदनुभवसद्भावादेव तेषामप्यनुभवोक्तिरिति तु न युक्तम् अखण्डानन्दरूपब्रह्मतापत्तौ तादृशब्रह्मकर्मकानुभवकर्तुः कस्यचिदभावादेव तदसंभवस्योक्तत्वात् । एतेन "सोऽश्नुतइत्यत्र गुणानां पृथक्प्राप्यत्वाङ्गीकारे ब्रह्मविदाप्नोतिपरमित्येतद्विरुद्ध्येत । तत्र ब्रह्मण एव प्राप्यत्वोक्तेः । ततश्च हिरण्यगर्भावसानानन्दानां विषयवृत्तिपरिच्छेदोपाधिकब्रह्मानन्दलेश-रूपत्वात्, एतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्तीतिश्रुतेः, अतिरेके-मानाभावाच्च ब्रह्मानन्दमश्नुवानस्तदविभक्तस्वभावान् सर्वानेवकामान् युगपद-श्नुत इत्युच्यते, सर्वनदीनदसंभेदमये सरस्वति स्नात इव सर्वत्र स्नातः । निरस्तसमस्तविशेषानन्दप्रकाशसत्तामात्रकैवल्येपि मोक्षे सहसर्वान्कामानश्नुत-इत्युपन्यासस्तु मोक्षे सर्वानन्दराशिरूपपरमानन्दसामान्यलाभात्कामेषु मनो न कार्यमित्येवंपर"इति **सिद्धान्तसिद्धाञ्जनोक्तं** निरस्तं वेदितव्यम् । सोऽश्नुतइत्यादेराप्नोतीत्युक्तप्राप्तिविवरणरूपत्वेन तदपेक्षयाधिकार्थकत्वाभावे तद्विवरणरूपत्वायोगेन सूत्रस्थानापन्नवाक्यानुक्तप्रमाणान्तरसिद्धयत्किञ्चिदर्थ-विषयकतायास्तस्यावश्यकत्वेन कामपदवाच्यब्रह्मगुणानां प्राप्यत्वाभ्युपगमे सूत्राविरोधइत्युक्तेरुपेक्ष्यत्वात् । ब्रह्मणा सह तद्गुणानश्नुते सकलकल्याण-गुणविशिष्टंब्रह्मानुभवतीत्यर्थे ब्रह्मणो गुणापेक्षयाऽप्राधान्यस्येष्टत्वेन विरोध-गन्धाभावात् । यदुक्तं हिरण्यगर्भावसानानन्दानां लेशरूपत्वादिति, तदसंबद्धम् । अस्मदादिभिस्तरतमभावेन प्रत्यक्षतोनुभूयमानानामानन्दानां विषयवृत्तिपरिच्छेदात्मकोपाध्यवच्छिन्नत्वेनाखण्डैकरूपब्रह्मानन्दैकदेशत्वेऽन -

न्यथासिद्धप्रमाणलेशादर्शनात् । स्वेच्छया तथाभ्युपगमेपि ब्रह्मभूतस्सन् सर्वान्कामानयुगपदश्नुत इति प्रतीयमानवाक्यार्थसामञ्जस्यसंपादनासंभवाच्च । नेन वाक्येन त्वद्रीत्यापि ब्रह्मत्वावस्थायां सर्वकामकर्मकप्राप्तेरेव प्रतीतेः । नहि तत्रतत्तदुपाधिनाशेनानवच्छिन्नोयःपरमानन्दस्तत्प्राप्तिरेव कामानित्यादि-नोच्यतइति कश्चिदपि प्रतिपद्यते । एवमेतस्यैवेत्यादिश्रुते र्हेतूकरणमप्ययुक्तम् । वाङ्मनसागोचराखण्डब्रह्मानन्दलेशरूपताया अर्थसामर्थ्येन, स्वरूपतः, प्रमाणाभावादेवोपाधितोवास्मदाद्यानन्देष्वसंभवेन तच्छ्रुतेर्ब्रह्मानन्दैकदेशं भूता-न्युपजीवन्तीत्यर्थे तात्पर्यवर्णनायोगात्, सर्वेपि लौकिका आनन्दा ब्रह्मानन्दा-पेक्षयात्यल्पतरा इत्यर्थस्यैव विवक्षणीयतया त्वदभिमतसाधकत्वासंभवात् । नह्यस्यां वा श्रुतावुपाधिश्श्रुतः, येनेयमेवौपाधिकभेदे प्रमाणं स्यात् । तस्माद्यथा रैक्वस्य साधुकर्म सर्वप्रजासाधुकर्मापेक्षयाऽधिकतरमिति बोधनाय 'लोके सर्वं साधुकर्म रैक्वस्य साधुकर्मण्यन्तर्भवती'त्यर्थकं, "एवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजास्साधुकुर्वन्ती"ति श्रूयते, एवमिहापि सर्व-वैषयिकानन्दापेक्षयाधिकतरो ब्रह्मानन्द इति बोधनाय सर्वाण्यपि भूतानि ब्रह्मानन्दस्य मात्रां लेशमुपजीवन्तीति श्रूयत इति युक्तं प्रतिपत्तुम् । लोकेपि देवदत्तस्य ज्ञानैकदेशमुपजीवन्त्यन्येज्ञानिनः, सर्वमन्यदीयज्ञानं देवदत्तज्ञानेन्तर्गतमित्यनयोस्समानतात्पर्यकतायाःप्रतीत्या अन्यदीयज्ञानापेक्षया देवदत्तज्ञानाधिक्यमेव यथा तत्र तात्पर्यविषय आश्रीयते तथा पूर्वोक्तश्रुतौ रैक्वज्ञानाधिक्यमिति मात्रामुपजीवन्तीतिश्रुतावपि ब्रह्मानन्दाधिक्यमेव विवेके विवक्षणायतो मर्हति । तत्र च श्रुतौ तादृशोक्त्या रैक्वसाधुकर्मणो महत्त्वमेव विवक्षितमित्येतट्टीकाकारेणैव प्रदर्शितम् "तद्धर्मस्य महत्त्वादन्येषां च धर्मजातस्याल्पत्वात्तस्येतरस्मिन्नन्तर्भावस्संभवतीति । नहि महत्त्वेपि

सागरसलिलस्य तस्मिन्नल्पस्यापि सरस्सलिलस्यान्तर्भावो वर्णयितुं शक्यः, स्वरूपभेदात्, एवमिहापीति वाक्यस्य प्रकृतार्थमहत्त्व एव तात्पर्यमिति । इत्थञ्च तच्छ्रुतेरन्यार्थकतया प्रकृतसाध्ये तस्या हेतूकरणमसंबद्धमेवेति । एवमतिरेके मानाभावश्चासिद्धः । ब्रह्मसंबन्ध्यानन्दस्य वैषयिकानन्दातिरेके यतोवाचोनिवर्तन्त इत्यस्यैव सुदृढप्रमाणत्वात् । नह्यवाङ्मनसगोचरानन्दे परिच्छिन्नास्मदाद्यानन्दाभेदसंभवः, बाधादेव । एवं हेतुद्वयस्याप्यसुन्दरत्वेन तेन साध्यसिद्धिप्रत्याशा दुराशैव । ब्रह्मानन्दमश्नुवान इत्यप्यसाधु । तस्यां दशायां परमानन्दरूपब्रह्मातिरेकेण तत्प्राप्तुः कस्यचिदभावात् । सर्वनदीनदेत्यादिदृष्टान्तश्च विषमः, सावयवस्य सरस्वतस्सर्वनदीनदसलिलसमुदायरूपतया तत्र स्नाते तादृशव्यवहारोपपत्तावपि दार्ष्टान्तिके निरवयवाखण्डानन्दरूपस्य ब्रह्मणस्सकललौकिकविषयानन्दसमुदायरूपत्वासंभवेन तत्प्रातरि तादृशव्यवहारायोगात् । लौकिकानन्दानां ब्रह्मानन्दत्वे च तेषां हेयतैव न स्यात् । ब्रह्मानन्दलिप्सया च सर्वमप्यकृत्यं श्लाघनीयं स्यात् । ईदृशब्रह्मानन्दलाभाय घटमानस्य नरकादिघटनमपि न संघटते । एवंहेयत्वेनाभिसंहितानां प्राप्यत्वेन सर्वान्कामानित्यभिधानं च न साम्प्रतम् । ततश्च त्वत्पक्षे सर्वान् कामानश्नुत इत्यस्य सर्वथा बाध एव प्रसज्यते । यदपि सर्वानित्याद्युपन्याससमर्थनम् तदपि मन्दम् ; मोक्षदशायां ब्रह्मभेदेन जीवसद्भावानभ्युपगमाद्ब्रह्मणश्च निर्विशेषत्वा न्मुमुक्षुंप्रति 'त्वया मोक्षदशायां महानानन्दो लप्स्यते' इत्याद्याश्वासनासंभवेन, तादृशोक्तेः 'पयःपिब, शिखा ते वर्धिष्यत' इत्युपच्छन्दनवाक्यसगर्भ्यत्वात् । परमानन्दस्य सर्वानन्दराशिरूपत्वोक्तिरप्यसंगता । ब्रह्मानन्द औपाधिकभेदासंभवस्योपपादितत्वात् । स्वाभाविकभेदाभ्युपगमे सावयवत्वप्रसङ्गेनाखण्डानन्दरूपत्वव्याघाताच्च । तस्मात्सिद्धान्तसिद्धाञ्जनोक्तं दुरुक्तमेवेत्यलम् ॥

इत्थंच सोऽश्नुतइत्यादिश्रुतेर्ब्रह्मतापत्तेर्निरतिशयपुरुषार्थप्रतिपादनपरत्वं निरुक्तवचनस्य तदुपबृंहणरूपत्वं चासंभवदुक्तिकमेवेति ।

यदप्युक्तं ब्रह्मणामहेत्यन्वयस्संप्रदायाऽऽगतवाक्यविच्छेदाननुगुणइति । तदपि न । अन्यथावाक्यविच्छेदेप्यर्थवशेन तथान्वये बाधकाभावात् । तथानन्वये ब्रह्मणेति तृतीयाया स्त्वदभिमतार्थकत्वासंभवस्योक्ततया ऽस्यैवाङ्गीकार्यत्वाच्च । अपिच "तेषामृग्यत्रार्थवशेनपादव्यवस्थे"तिजैमिन्युक्त-र्लक्षणविरोधस्तथान्वय इति हि भवदभिप्रायः । स न संभवति । तस्योपलक्षणत्वमभिप्रेत्यार्थवशेन वृत्तवशेन वा पादव्यवस्थेति व्याख्यातृभि-र्व्याख्यातत्वेन विरोधाभावात् । किञ्च महेत्यस्य यौगपद्यार्थकत्वेपि अर्थवशेनेत्येतदनुसरणमशक्यमेव; ब्रह्मभूतस्सन् कामान्युगपदश्नुतइत्येव त्वदभिमततया महशब्दान्तभागेऽर्थसमाप्त्यभावात् । एवं ब्रह्मणेत्यादि-भागान्तरस्यापि यत्किञ्चिदवान्तरार्थबोधकत्वाभावेन तेत्राप्यर्थवशेन पादव्य-वस्था दुर्घटैव । तस्माद्धेत्वन्तरेण तद्व्यवस्थैव त्वया प्यास्थेयेति सहेत्यस्य स्वारस्याद्ब्रह्मणेत्यनेनान्वये न किमपि बाधकं पश्यामः । तदुक्तं **मयूखमालिकायाम्** "इदंच पादव्यवस्थाहेतूनां वृत्तवशादीनामुपलक्षण"-मित्यादि । अपिच तान्त्रिकैरेव कैश्चित् "अग्निमीले पुरोहितम्— रत्नधातमम् । अग्निः पूर्वेभिर्ऋषिभि"रिति समुदायस्याष्टाक्षरचतुष्पादक-त्वप्राप्तानुष्टुप्छन्दस्कत्ववारणायार्थवशेनेति विशिष्टैकार्थप्रतिपादकत्वेसतीत्यर्थकं मत् विशिष्टलक्षणशरीरानुप्रविष्टविशेषणांशपरमित्यङ्गीकृततया प्रकृते नैत-च्छङ्कावकाशलेशोपि । तत्र पक्षेर्थसमाप्त्यधीनपादव्यवस्थाया अविवक्षणा-दिति ॥ नाप्येवमन्वयेब्रह्मणोऽप्राधान्यं दोषः । गुणापेक्षया तस्येष्टत्वात् । भोग्यसाहित्यस्यैव विवक्षितत्वात् । गुणप्राधान्यं हि गुण्यतिशये पर्यवस्यतीति ।

यदुक्तं **सिद्धान्तसिद्धाञ्जने** "मोऽश्नुत इत्यत्र ब्रह्मणा सहेति नान्वयः । तथासति पुत्रेण सहाऽऽगतः पितेत्यादाविव ब्रह्मणोऽश्नुवानापेक्षयाऽप्राधान्यप्रसंगात् । नचवाच्यं कामपदं जीवगुणैश्वर्यपरम् ; जीवस्स्वप्रयत्नेन स्वकीयं गुणादिकमनुभवतीत्यर्थ इति तस्यैव प्राधान्यस्य विवक्षणीयतया ब्रह्मणोऽप्राधान्यं न दोष इति । तथासति ब्रह्मणस्सहत्ववचनस्यानर्थक्यप्रसंगात् । नचशङ्क्यं ब्रह्मणस्समभिव्याहृतक्रियान्वयाभावेपि सहभावमात्रविवक्षया "अग्ना इ पत्नीवा स्सजूर्देवेनत्वष्ट्रा सोमं पिब स्वाहा" "सहैव दशभिः पुत्रैः भारं वहति गर्दभी"त्यादाविव ब्रह्मणासहेति प्रयोगोपपत्तिरिति । सर्वेषां सर्वदा ब्रह्मसहभावस्य नियततया मुक्तविषये तस्य विशिष्याभिधानवैयर्थ्यात् । मुक्तावभेदभ्रमनिरासाय तदभिधानमित्यप्ययुक्तम्, प्रत्यक्षादिना तदसंभवात् । अभेदस्य ब्रह्म वेद ब्रह्मैव भवतीत्यादिस्वतुल्यप्रमाणकशास्त्रसिद्धत्वेन तज्ज्ञानस्य भ्रमत्वायोगेन तथोक्तेरयुक्तत्वाच्च । तादृशशास्त्रसिद्धाभेदाविरोधेनैव सहत्वान्वयस्वारस्यसंभवाच्च । पत्न्या सह प्राणानायम्येत्यादाविव मुक्तस्य कामप्राप्तौ ब्रह्मणोनुमन्तृत्वेनान्वयात्सहत्वोक्तिरित्यप्यसुन्दरम् । तस्य सर्वदा सर्वानुमन्तृत्वेन मुक्तविषये तस्य विशिष्योक्तेरनतिप्रयोजनकत्वात् । स्वतस्साहित्यपरस्य सहशब्दस्य राज्ञा सह भोगानमात्यो भुङ्क्त इत्यादाविव तुल्यत्वपरत्वाश्रयणं तु लक्षणाप्रसंगाद्धेयम् । किंच मुक्तो ब्रह्मणासह कामानश्नुत इत्यस्य भोगतौल्यपरत्वे ब्रह्म कामानश्नुते मुक्तोपि तत्तुल्यं कामानश्नुतइत्यर्थपर्यवसानेन कामपदेन कामचारसांकल्पिकपित्रादिभोगग्रहणे तस्य ब्रह्मण्यसंभवात्तेन जगन्नियमनादिभोगग्रहणे तस्य मुक्तेऽसंभवाच्च वाक्यार्थासंगतिर्दुर्वारा । नचवाच्यं मुक्तस्य ब्रह्मगुणविभवाद्यनुभवाङ्गीकारादुभयोस्तुल्यभोगोपपत्तिरिति । तुल्यन्यायेन ब्रह्मणो

जीवगुणाद्यनुभवाभ्युपगमप्रसंगात् । नन्वनुकूलतया विषयानुभवो भोगः ब्रह्मणोनुकूलतया कस्यचिदनुभवाभावादेव न भोगप्रसंग इति चेन्न; तथासति मुक्तस्य तत्तुल्यभोगत्वानुपपत्तेः । अपिचानुकूलतया विषयानुभवस्यैव भोगत्वाङ्गीकारे आनन्दातिरिक्तस्यानुकूलतया वेदनीयत्वासंभवात् गुणान्तराणां ब्रह्मण आनन्द इत्याद्येकवचनेनानन्दत्वायोगादानन्दस्य नित्यत्वादेव तद्धेतुतया ब्रह्मणोनुकूलतया वेदनीयत्वासंभवाच्च मुक्तस्य त्वदभिमतगुणान्तरानुभवात्मक-भोगो दत्तजलाञ्जलिस्स्यात् । नन्वेवंसति कथं भोगमात्रसाम्यं सूत्रितमिति-चेन्न । तस्योपासनामुक्तविषयत्वेन परममुक्तविषयत्वाभावात् । नन्वन्नेन सह सूपमत्तीत्यत्रेव भोग्यसाहित्यमत्र विवक्ष्यते । तत्रान्नस्येव प्रकृतेब्रह्मणआर्थ-प्राधान्याविरोधात् । किञ्चानन्दव्यतिरिक्तस्यापिकाम्यमानत्वेनानुकूलवेदनीयत्व-मभ्युपगम्यते । इत्थंच ब्रह्मणोपि कामपदेनैव ग्रहणसंभवे ब्रह्मणेति पृथगुपादानं तत्प्राधान्यविवक्षार्थं भविष्यति । अपिच गुणप्राधान्येपि न किंचिद्बाधकम्, यथोपासनमेव फलाभ्युपगमाद्गुणप्राधान्येनोपासनायां कृतायां तथैव फलप्राप्त्या मुक्तिदशायां तन्मात्रप्राधान्योपपत्तेरिति चेन्न । ब्रह्म-विदाप्नोतीत्युपक्रमे ब्रह्मण एव स्वप्रधानतया प्राप्यत्वाभिधानविरोधात् । परशब्दकामशब्दयोर्वचनभेदेनैकार्थकत्वासंभवात् । ममत्वानन्दरूपं ब्रह्मैव बहुविधविषयोपाधिभेदावच्छेदेन कामा इत्युच्यत इति न विरोधः । ब्रह्मणा हेतुना कामान् सह युगपदश्नुत इत्यर्थवर्णनसंभवाद्धेतुतृतीयेत्यपि न युक्तम् पूर्वोक्तविरोधादेव । तस्माद्ब्रह्मणेत्यत्रेत्थंभूतलक्षणे तृतीयेत्येव युक्तमाश्र-यितुम् । "सोश्नुते सकलान् —न संशय" इत्युपबृंहणानुसाराच्च । आप्नोति परमितिभेदव्यपदेशस्तु प्राचीनभेदव्यपाश्रयो नेयः । ब्रह्मवित्प्रागनाप्त-मिवाप्नोतीति तात्पर्याङ्गीकारात् । परिशुद्धं स्वस्वरूपमपि प्राप्यत्वादनु-

संधेयमिति वदतस्तवापि पक्षे प्रत्यगात्मनि प्राप्यत्वप्राप्तृत्वयोरेवमेव नेयत्वा"दिति।

तदेतत्सर्वमसंगतम्। ब्रह्मणा सहेत्यत्र सहयुक्त इतिस्मृत्यैव तृतीया प्रवृत्तिमाश्रित्य भोग्यसाहित्यविवक्षया सकलकल्याणगुणविशिष्टं ब्रह्मानुभवतीत्यर्थाङ्गीकारे दोषगन्धाभावात्। पुत्रेण सहान्नं भुङ्क्त इत्यत्रेव भोक्तृसाहित्य· विवक्षायां मुक्तापेक्षया ब्रह्मणो भोक्तृत्वांशेऽप्राधान्यात्मकस्यदोषस्य प्रसंगेपि पयसासहौदनंभुङ्क्त इत्यत्रेव भोग्यसाहित्यस्य विवक्षायां तदभावात्।

वस्तुतो गृहिणोतिथ्यपेक्षया प्राधान्येऽपि तद्विषये गृहिणा क्रियमाणमादरातिशयं तन्निबन्धनमतिथिनाक्रियमाणं गृहिकृत्यं सहभोक्तृविचारणादिकं च पर्यालोच्यातिथिप्राधान्यद्योतनाय गृहिणासहातिथिर्भुङ्क्ते इति यथा व्यवह्रियते, तद्वत्प्रकृतेपि मुक्तविषयब्रह्मकर्तृकादरातिशय-तन्निबन्धनतदभिमत-गुणानुभवस्वातन्त्र्यादिद्योतनाय ब्रह्मणा भोक्त्रा सह मुक्तो गुणाननुभवतात्यर्थ-विवक्षया भोक्तृसाहित्याश्रयणेपि न काप्यनुपपत्तिः। एवं ब्रह्मणस्सर्वकाम-भोक्तृत्वस्य सार्वकालिकतया मुक्तस्यैव स भोगस्साम्प्रतिको ऽपूर्व इति अत्र प्राधान्यविवक्षया नित्यभोक्त्रा तेन सहाऽयमुपासकोपि कामानश्नुते इति भोक्तृसाहित्यं वर्ण्यमानं न ब्रह्मणस्साहजिकं प्राधान्यं व्याहन्तीति ध्येयम्।

पयसा सहेत्यत्रेव भोग्यसाहित्यविवक्षायां च भोग्यत्वांशे गुणापेक्षया ब्रह्मणोऽप्राधान्यप्रतीतावपि गुणगतभोग्यतातिशयस्यगुण्यतिशयपर्यवसायितया तस्य गुणत्वमेवेति नदोषत्वशङ्कावकाशः।

अत्रेदमवधेयम्—नहि सहयुक्तइतिशास्त्रविहिततृतीयाङ्गीकारमात्रेण वस्तुस्वभावविरुद्धप्राधान्याप्राधान्यनिर्णयस्सुकरः। अपितु तदविरोधेनैवा-प्राधान्यविवक्षाधीनप्रवृत्तिकतादृशतृतीयाप्रकृत्यर्थाप्राधान्यविवक्षायाः प्रयोजन-

विशेषो वर्णनीयः। यत्किञ्चित्प्रयोजनसिद्ध्येविवक्षितं च तदप्राधान्यं न वस्तुमत्प्राधान्यं प्रतिरोद्धुमलम्। सेनया सह राजा समागच्छतीतिवत् राज्ञा सह सेना समागच्छतीत्यपि हि प्रयोगस्सुयोजः। राजापेक्षयापि युद्धोत्साह-शालिनी सेनेति समागमनप्रकारेणैव ज्ञायत इत्यर्थविवक्षासंभवात्। एवं विवक्षावशादोदनमपि कदाचित्प्रधानं भवति, कदाचित्पयोपि। यदा तु क्षुदभावेपि पयोर्थमोदनंभुङ्क्ते, तदा ओदनेन सह पयो भुङ्क्त इत्यपि प्रयोगसंभवात्। नह्योदनगतमेतावताप्राधान्यमपगमयितुं शक्यम्। अतएवात्र "अप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभावः" "शाब्दत्वं च विवक्षान-बन्धन"मित्युक्तं शब्दरत्ने। एवमुक्त्या 'वस्तुतः प्रधानाप्रधानयोरपि विवक्षावशादप्राधान्यप्राधान्ये उपपद्येते। एते च न वस्तुसत्प्राधान्याप्राधान्ये बाधेते। प्रयोजनविशेषसिद्ध्ये परं विवक्ष्येते इति हि बोध्यते। अतएव "शाब्दत्वंचे"त्येतत्, "नन्वेवं पित्रा सहाऽऽगत स्सुत इत्यादि न स्यात्, अत आहे"त्यवतारितं भावप्रकाशे। "तथाच सहागतौ पितापुत्रौ इत्याद्यपि सिद्ध"मितिचोक्तम्। कस्यापि प्राधान्याविवक्षायांसूत्राप्रवृत्तिरिति तत्तात्पर्यम्। अन्यत्राप्युक्तम् "न प्रधानत्वं मुख्यत्वं, तदभावोऽप्रधानत्वम्", "राज्ञासह सेनासमागच्छतीत्यादौ तृतीयानापत्ते"रिति। किंबहुना? अन्नेन सह सूपमत्तीति प्रयोगमुपाददानेन परेणाप्यप्राधान्यविवक्षाधीनप्रवृत्तिकत्वमस्यास्तृतीयायाअभ्यु-पगतमिति हि सूच्यते। एवं गुणापेक्षया ब्रह्मणस्सर्वदा प्राधान्येपि यत्किञ्चित्प्रयोजनकविवक्षावशेनाश्रीयमाणमप्राधान्यं न ब्रह्मणि कञ्चन दोषमापादयेत्। ब्रह्मापेक्षयापि तद्गुणा भोग्यतमा इति द्योतनाय तथा प्रयोगे तादृशभोग्यतमगुणविशिष्टत्वेन ब्रह्मण उत्कर्ष एव सिद्ध्यतीति। यथा पतिरेव गुणनिधिः, तदपेक्षयापि तत्पत्नी। आदित्यमण्यादि द्योतते,

तत्प्रभा तु विद्योतते इत्याद्युक्तिः पत्यादित्याद्यतिशयपर्यवसायिनीत्योश्रीयत इत्यलम् ।

एवमियतैव तत्कृत्स्नमर्थविचारनैष्फल्यद्योतनेपि प्रत्येकमपि तान् प्रकारान्तरेण परिहरामः । यदुक्तं, कामपदं जीवगुणैश्वर्यपरमित्यादि : तन्न । अस्मिन्कामास्समाहिताःसत्यकामइत्यादिश्रुतिप्रसिद्ध्या ब्रह्मगुणपरताया एव झटिति प्रतीत्या ब्रह्मप्रकरणे जीवगुणपरत्वस्य शंकावसरेपि हेयत्वात् । तस्य तत्परत्वेपि सर्वस्य परमात्मसंकल्पायत्तत्वशास्त्रानुसारेण जीवस्य स्वकीयगुणानुभवेपि त्वदभिमतप्राधान्यासंभवाच्च । एवं समाधानग्रन्थे महत्ववचनानर्थक्योक्तिरप्ययुक्ता । अचिज्जीवतत्संबन्धिगुणादिरूपसकलप्रकारविशिष्टस्य ब्रह्मण एव ब्रह्मजीवोभयानुभाव्यत्वोपगमेन तदानर्थक्यासंभवात् ।

यदपि ब्रह्मणः क्रियान्वयाभावेपि सहभावविवक्षायां 'सह'प्रयोग उपपद्यत इतिशंकायामुक्तं सर्वेषां सर्वदेत्यादि; तदपि न। सर्वशासनसमर्थेन राज्ञा सहितो युवराज एव सर्वं शास्ति इत्यादाविव विग्रहविशेषविशिष्टतत्सान्निध्य-तन्निरतिशयप्रियत्व तच्छन्दप्रत्यक्ष तदनुवर्तित्व तदभिनन्दनादिद्योतनाय ब्रह्मसाहित्यविशेषविवक्षया ब्रह्मणासहितो गुणानश्नुतइति विशिष्याभिधानोपपत्तेः । किञ्च विशिष्याभिधानस्य मुक्तावभेदभ्रमनिरासार्थत्वमपि वर्णयितुं शक्यम्, ब्रह्मणा सहितस्सन्नेवाश्नुते, न तु ब्रह्माभिन्न इति । ब्रह्म वेद ब्रह्मैव भवतीत्यादेस्तुल्यप्रमाणत्वेपि मुक्तिदशायामपि जीवब्रह्मभेदबोधकश्रुतिस्मृत्यविरोधाय तस्य "विष्णुरेव भूत्वा" "रामसुग्रीवयोरैक्य"मित्यादेरिवात्यन्तसाम्यपरत्वस्यैवाङ्गीकार्यतयाऽऽपाततःप्रतीयमानार्थविषयकं ज्ञानं भ्रम एवेति तादृशार्थो नोपादेय इति ज्ञापनार्थं विशिष्याभिधानोपपत्तेः । ब्रह्मणासहेत्यस्य स्वरसतो भेदगर्भ-

साहित्यपरत्वस्य निराकरणतया निरुक्तयोर्जनकत्वोपपत्तेः । त्वदभिमत-सहत्वान्वयस्य निरसिष्यमाणत्वाच्च । पत्न्यासह प्राणानायम्येत्यादाविवानु-मन्तृत्वयोरनर्थत्वमपि तस्य वर्णयितुं शक्यम् । ब्राह्मणस्य सर्वकामानुमन्तृत्वेपि लोकेऽन्यकर्तृकस्य स्वकीयसर्वविषयकस्यानुभवस्य स्वानभिमतत्वदर्शनेन तन्न्या-यशङ्कितस्य मुक्तकर्तृकब्रह्मसंबन्धिकामपदवाच्यगुणानुभवे तदनभिमतत्वस्य निरासाय विशिष्यानुमन्तृत्वोक्तिरित्यभ्युपगमसंभवात् । यदप्युक्तं साहित्य-परस्य सहशब्दस्य तुल्यपरत्वे लक्षणेत्यादि । तदपि न । अर्थसौन्दर्ये भोगतौल्यस्य प्रमाणसिद्धत्वे च सति लक्षणामात्रस्यादोषत्वात् । वाक्यस्य भोगतौल्यपरत्वे वाक्यार्थसंगत्यनुपपत्त्युक्तिरपि दुरुक्तिः । कामपदेन काम्यमानब्रह्मसंबन्धिसर्वगुणजातग्रहणे दोषलेशाभावात् । जीवस्य सर्वगुणानु-भवितृतायाः प्रामाणिकत्वात् । कामपदेन ब्रह्मजीवोभयकाम्यमानोभयसंबन्धि-गुणजातग्रहणेपि न किञ्चिद्बाधकम् उभयसंबन्धिगुणजातस्योभयानुभाव्यत्वा-भ्युपगमात् । एतेन तुल्यन्यायेनेत्यादि दत्तोत्तरं वेदितव्यम्, इष्टापत्तेः । यदप्युक्तमनुकूलतयाविषयानुभवस्यैव भोगत्वाङ्गीकार इत्यादि ; तदपि न । तथाङ्गीकारेपि धर्मभूतज्ञानपरिणामात्मकानन्दातिरिक्तानामपि सर्वेषां प्राकृता-प्राकृतानां पदार्थानां निरतिशयानुकूलतया ब्रह्मनित्यमुक्तानुभाव्यतायाः प्रमाणानुगुण्येनाभ्युपगमान्मुक्तस्याजलाञ्जलिप्रसंगमस्मदभिमतभोगस्य जीव-नोपपत्तेः । यदपि भोगमात्रेतिसूत्रस्यान्यविषयतया नयनम् तदपि तुच्छम् । निर्गुणसगुणभेदेन ब्रह्मद्वैविध्यस्य तदनुसारेणोपासनाद्वैविध्यस्य तदानुगुण्येन मुक्तिद्वैविध्यस्य चोपपत्तिवैधुर्यप्रमाणाभावतद्विरोधादिभिस्सुदूरनिरस्तत्वात् । यदप्युक्तमन्नेनसह सूपमत्तीत्यादाविव भोग्यसाहित्यविवक्षायां ब्रह्मविदाप्नोति परमित्युपक्रमविरोध इति तदतिस्थवीयः । गुणसामान्यरहितस्य ब्रह्मणश्श-

शविषाणसोदरतया प्राप्यत्वासंभवेन तद्विशिष्टस्यैव तत्त्वस्याभ्युपगन्तव्यतया तदनुरोधात्प्रमाणान्तरानुपराच्च सोऽश्नुत इत्यत्रापि गुणविशिष्टब्रह्मणः प्राप्यत्वमभिधीयत इत्यनिच्छतापि स्वीकार्यत्वात् । अन्यथोपक्रमावगत-बृहत्त्वविवेचत्वाऽऽप्यत्वपरत्वानामपि ब्रह्मणप्रसंगात् । तेनापि ब्रह्मणो वाक्यनैरर्थक्यापत्तेः । नैवमभ्युपगमे तुल्यन्यायेन प्रमाणान्तरनिरस्तकामाभ्युपगमे प्रद्वेषायोगात् । यत्तूक्तं ब्रह्मणेति पृथगुपादानं प्राधान्यविवक्षार्थमिति ; तत्र न नो विद्वेषः । तन्निरासहेतुस्तु निरस्त एव । येयमुक्तिश्शङ्कावसरे यथोपासनमेव फलमिति गुणप्राधान्येऽपि न दोष इति साप्ययुक्ता । सर्वत्र गुणविशिष्टब्रह्मण एवोपास्यत्वाभ्युपगमात् । तदनुरोधेन फलदशायामपि तथैव प्राप्त्यभ्युपगमाच्च । कामानिति गुणप्राधान्यनिर्देशस्तु गुण्यतिशय-सिद्ध्यर्थः, न प्राप्तिदशायां तत्प्राधान्यप्रदर्शनपर इत्युक्तमेव । परशब्द-कामशब्दयोरेकार्थत्वनिरासोऽप्यस्माकमिष्ट एव । परशब्दस्य ब्रह्मपरतायाः कामशब्दस्य परत्वोपयोगिकल्याणगुणपरतायाश्चाभ्युपगमात् । यदपि स्वमनेत्रा-विरोधोपपादनं, तदपि विरोधोपहतमेव । ब्रह्मपरस्यैकवचनान्तपरपदस्य बहुवचनान्तव्यधिकरणब्रह्मपदसमभिव्याहृतकामपदस्य चैकार्थकत्ववर्णनस्याऽऽ-पण्डितपामरसुपहास्यत्वात् । एवमपि भक्षितेऽपि लशुन इति न्यायेनोप-क्रमेऽखण्डानन्दरूपब्रह्मणो वाक्येऽस्मिन् बहुविधोपाध्यवच्छिन्नब्रह्मणश्च प्राप्यत्वाभिधानेनार्थवैरूप्यस्यापरिहारात् । फलदशायामुपाध्यवच्छिन्नस्य त्वया प्राप्यत्वानभ्युपगमेन वाक्यार्थासांगत्यप्रसंगात् । ब्रह्मभूतो भवतीत्येतावत एव वक्तव्यत्वेन ब्रह्मभूतः कामानश्नुत इत्यधिकोक्तेरसामञ्जस्यात् ; सर्वान्निरतिविशेषणस्यासुन्दरत्वाच्च । हेतुतृतीयेयमित्यपि युक्तं प्रतिपत्तुम् । परमात्मसंकल्पादेव मुक्तस्य सर्वकामानुभव इत्यस्य श्रुतिस्मृतिसूत्रसिद्धतया

वाक्यार्थोपपत्तेः । उपक्रमस्य परमात्मप्राप्तिप्रतिपादकत्वासंभववर्णनेन तद्विरोधाभावात् । परंत्वत्र पक्षे विनागुणिनं गुणमात्रप्राप्तेरसंभवेन ब्रह्मप्राप्तिरप्यर्थादुक्तेति स्वीकर्तव्यम् । ब्रह्मणा परमात्मना हेतुना परमात्मसंकल्परूपहेतुनेति यावत् । सर्वान् कामान् सकलगुणविशिष्टं ब्रह्म सहाश्नुत इति वाक्यार्थः ।

एवं सो—विपश्चितेति वाक्यस्य निरसनीयत्वेन त्वदभिमततत्तदर्थसाधुत्ववर्णनसंभवेपि ब्रह्मणा सह मुक्तस्सर्वान्कामानश्नुत इति वाक्यस्वारस्यपर्यालोचनया सहयुक्त इति शास्त्रविहिततृतीयां तत्राप्युपक्रमे कण्ठोक्तपरब्रह्मप्राप्तेस्तद्विवरणवाक्येपि कण्ठोक्तत्वलाभाय भोग्यसाहित्यविवक्षां चाश्रित्य फलतस्सर्वकामविशिष्टं ब्रह्माश्नुत इत्यर्थ एवोपवर्णित इति ध्येयम् ।

यदुक्तमन्तत इत्थंभूतलक्षणे तृतीयेत्यादि ; तदत्यन्तायुक्तम् । श्वेतच्छत्रेण राजा, जटाभिस्तापस इत्यादिषु ज्ञाप्यज्ञापकार्थद्वयवाचकपदसमभिव्याहारे ज्ञापकवाचकात्तत्प्रवृत्तेरेव सर्वशाब्दिकसंमतत्वात् । प्रकृते च सर्वकामप्राप्तेर्ब्रह्मज्ञाप्यत्वासंभवादनभ्युपगमाच्च । इत्थंभूतस्य कंचन प्रकारविशेषमापन्नस्य किंचिन्निष्ठप्रकारस्येतियावत् । लक्षणं ज्ञापकं यत्तद्वाचकाच्छब्दात्तृतीयेति सूत्रार्थात् । अतो नैततृतीयाप्रसक्तिः । ननु संभवत्येव ज्ञाप्यज्ञापकभावः । ब्रह्मणोऽपरिच्छिन्नानन्दानुभवात्मकतया तल्लाभे 'एतस्यैवानन्दस्येति प्रमाणवशात्तदेकदेशतयावश्याभ्युपगन्तव्यानां बहुवैषयिकसुखविशेषाणां शतपञ्चाशन्न्यायेन तदन्तर्गततया लब्धत्वस्यावर्जनीयत्वेन शतेपञ्चाशदस्तित्वज्ञापकत्ववत् तादृशब्रह्मणः कामानुभवात्मकतत्प्राप्तिज्ञापकतायास्सुघटितत्वादितिचेन्न । ब्रह्मणो निरतिशयानन्दादिगुणविशिष्टत्वेनानन्दानुभवरूपत्वाभावात् । हेयतया शास्त्रसिद्धसुखविशेषाणामखण्डानन्दात्मकब्रह्मलेशत्वस्यासंभवात् । ब्रह्मणो वैषयिकसुखसमुदायरूपत्वे-

चावयवसमुदायातिरिक्तावयव्यभावेनोभयोर्भेदाभावेन ज्ञाप्यज्ञापकभावायोगात् । सर्वसखण्डानन्दानामखण्डानन्दस्य च क्रमिकत्वेन यौगपद्यायोगात्, अखण्डानन्दलाभदशायां जगतो बाधितत्वेन ब्रह्मव्यतिरिक्तविषयाभावाच्च व्याप्यव्यापकभावाभावेन ज्ञापकस्यानुपपत्तेः । ज्ञाप्याभिमतानां तेषां तदानीमभावेनाश्नुतइत्युक्तिविरोधाच्च । ब्रह्मणोपि सांशत्वबाधितत्वप्रसंगाच्च । ननु सर्वकामानुभवस्य ब्रह्मानुभवांशत्वं बुद्ध्या परिकल्प्य सागरे गोष्पदस्येव तत्र तस्यान्तर्भूततया ब्रह्मज्ञानेन सर्वकामज्ञानसिद्धिर्वर्णनीयेति चेन्न; अस्याप्यसंभवात् । किमेतद्वाक्यप्रवृत्तेःप्रागेवास्य ब्रह्मानुभवैकदेशत्वं ज्ञातं, उत न? नचेदंशत्वज्ञानाभावे ब्रह्मानुभवज्ञापितत्वस्यासिद्ध्या प्रकृततृतीयायास्तादृशार्थकत्वनिश्चयासंभवः, ज्ञातंचेत्, तर्हि तेनैव प्रमाणेन तत्सिद्धौ तत्परप्रकृतवाक्यवैयर्थ्यमिति । अतः, अश्नुतेसर्वान्कामान्सहेति कृत्स्नस्य ब्रह्मानुभवांशप्राप्त्यर्थकत्वे श्रौताबाधितार्थत्यागप्रसंगाच्च ज्ञापकतृतीया दुर्घटेत्यलम् ।

उपबृंहणरहस्यं तु पूर्वमेवोद्घाटितम् । किंच स्कान्दपुराणान्तर्गतसूतसंहितागतास्सुस्पष्टार्थकानन्यथासिद्धतत्तच्छ्रुतिगीताभारतरामायणादिसंप्रतिपन्नोपबृंहणविरुद्धा ईदृशा बहवश्श्लोकाः केनचित्पुरुषाधमेन श्रीमन्नारायणपारम्यजगत्सत्यत्वादिप्रामाणिकार्थविद्वेषशीलेनानीदृशं शिवाद्वैतमेव बहुमन्यमानेन प्रक्षेपात्मकप्रमाणान्यथाकरणनिबन्धनं निरयपातमपि स्वाभिमतसिद्धान्तस्थापनश्रद्धया पुरुषार्थमन्यमानेन सत्यं प्रक्षिप्ता एवेति न तदनुरोधेन श्रुत्यर्थवर्णनं प्रमाणिकमनो मनागपि विनोदयेत् ।

तथाहि तत्रतत्र तस्यां संहितायामिदानीं परिदृश्यमानाः—

"अस्मिन् ब्रह्मपुरे वेश्म दहरं यदिदं सुराः ।
पुण्डरीकं तु तन्मध्य आकाशो दहरोस्ति तु ॥

स शिवस्सच्चिदानन्दस्सोन्वेष्टव्यो मुमुक्षुभिः ।
स विजिज्ञासितव्यश्च त्रिना संकोचगात्मिकाः ॥

यावान्वा अयमाकाशस्तावानाकाश आन्तरः ।
द्यावापृथीवी उभे अस्मिन्नन्तरेव समाहिते ॥

उभावग्निश्च—यच्चास्तीत्येन भाषते ।
यच्च नास्ति—शम्भुस्सर्वं तादी समाव्रतः ॥

एत्र आत्मा—विशोको—यथाकर्मजिताः— ।
अयं हृदि स्थितस्साक्षी सर्वेषामविशेषतः ।
तेनायं हृदयं प्रोक्तं शिवस्संसारमोचकः ॥ "

इत्यादिश्लोका यदि प्रमाणभावमनुभवेयुः, किमिति तर्हि सर्वज्ञैश्श्रीशङ्कराचार्यै-र्दहराद्यधिकरणेषु नोपात्ता इति विचारणीयम् । अतोवमीयते ईदृशाश्श्लोकाः केनचिद्दुर्मतेन प्रक्षिप्ता इति । नकेवलमनुपादानमात्रम् । तत्प्रामाण्या-भ्युपगमे तद्विरोधोपि शाङ्करस्य दुष्परिहरः । तत्र हि स्मृत्यधिकरणे "अतश्च संक्षेपमिमं शृणुध्वम् । नारायणस्सर्वमिदं पुराणः । स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः "इति भाषितम् । अनेन स्त्रेन तत्रतत्र जन्माद्यधिकरणादौ संशयसिद्धान्तप्रदर्शनावसरे प्रयुक्ताः परमात्मपरब्रह्म-परमेश्वरादिशब्दा नारायणबोधकत्वतात्पर्येणैव प्रयुक्ता इति सुस्पष्टमवगम्यते । जगतोनानाकारणकताया अकारणदैवतोपासनस्य च केनाप्यनभ्युपगमात् । कुत्रापि कोणे शाङ्करे शिवादिकारणत्वस्यानाघ्रातत्वाच्च । स्पष्टंचेदमनभि-निविष्टमनस्कानामदसीयंग्रन्थमधीयानानाम् । अत्रपुनस्संहितायां कारणत्वो-पास्यत्वे निर्विशङ्कमुमापतेरेव प्रतिपादिते ।

"सोपि नारायणश्श्रीमान्— ।
वेदव्यासेन कैलासमगमत्परमर्षयः ।"

"जगतः कारणं बुध्वा भजध्वं सर्वकारणम् ।"

इत्यादिष्विति । किंच श्लोकशैल्यपि प्रक्षिप्तत्वमेषामवगमयति । नहि संप्रतिपन्नेषु तत्तच्छ्रुतिभागव्याख्यानायप्रवृत्तेषु स्मृतिपुराणाद्युपबृंहणेष्वेतादृशी पदवाक्यलेशापरित्यागेन सर्वांशव्याख्यानपरा नियमेन शम्भुशिवाद्वयाद्वैतादिशब्दमात्रवती संशयलेशराहित्येन जीवपारम्यजगन्मिथ्यात्वादिपरपक्षैकान्तार्थज्ञानप्रतिपादनव्यग्रा केनापि कुत्राप्युपलभ्यते । व्याख्यातृगौरवेण मूलप्रामाण्यं तु न शङ्कनीयम् । प्रबलेन हेतुना तदप्रामाण्यसिद्धौ दीक्षितादिवत्तस्याप्यनाप्तकोटौ निर्विशङ्कं निक्षेपसंभवात्, यः खलु नारायणनिष्कर्षप्रतिपादनैदम्पर्येणैव प्रवृत्ते प्रकरणे विद्यमानमपि 'तेजसा भासयन्सर्वं चतुर्वर्गफलप्रद' मित्यत्र भासयन्नितिपदं 'द्वितीयार्थे प्रथमा । तेजसा सर्वंभासयन्यश्चतुर्वर्गफलप्रदस्तमिति प्रकृत्यर्थविशेषणंवा, शोभनंपठतीति क्रियाविशेषणवत्' इति प्रथमं व्याख्याय मध्यस्थजनपरीवादपरिजिहीर्षया पुनरपि सानुशयमनाइव 'विष्णुर्वा भासयन्नस्तु' इति व्याचख्यौ । तस्मादीदृशाश्श्लोकास्संपूर्णसंहितैव वा पूर्वोक्तविशेषणशालिना केनचिन्निर्मिता एवेत्यलमधिकेन पुनरप्युपबृंहणरहस्योद्घाटनेन ।

यदपि भेदव्यपदेशनयनं, तदपि क्लिष्टत्वादेव हेयम् । मुक्तावभेदबोधकानन्यथासिद्धप्रमाणाभावाच्च । स्वस्वरूपविषये नास्माकं दोषः, तदातनभेदस्यैव सत्त्वात् । एतदुक्तं भवति :—नास्मत्पक्षे परिशुद्धस्वरूपस्यैकस्यैव प्राप्यत्वप्राप्तृत्वाभ्युपगमे विरोधगन्धः । मुक्तौ सर्वकर्मनिवृत्त्या गुणाष्टकाविर्भावाभ्युपगमेन तद्विशिष्टस्यस्वात्मनः प्राप्यत्वं केवलस्य प्राप्तृत्वमिति शुद्धाद्विशिष्टस्य विशेषणभेदेन भेदसौलभ्यात् । एवमात्मगतानुकूल्यातिशयभानं ज्ञानविकासंवादायापि भेद उपपादनीयः । दशमोऽहमित्यत्रैकस्यैव दशमत्वप्रकारकज्ञानाश्रयत्वतद्विषयत्वयोरिव स्वस्य स्वात्मानुभवबोधकप्रमाणबलेनस्वात्मन एवानुभवाश्रयत्वतद्विषयत्वयोरभ्युपगमे बाधकाभावाच्च । परस्य

तु ब्रह्मविषये नैतत्स्मर्तुमपि शक्यम् । मुक्तिदशायां प्रागनातस्य कस्यचिदाप्त्यनभ्युपगमात्, निर्विशेषस्यैकस्यैवावस्थानं मुक्तिरिति स्वीकारात्, तदाप्राप्यप्राप्त्राकारभेदानङ्गीकारात् । मुक्तिदशायां क्रियाकर्तृकर्मणां त्रयाणामपि भेदानङ्गीकारेण मुक्तो ब्रह्मानुभवतीत्युक्त्यसंभवाच्च । मुक्तावपि जीवब्रह्मभेदबोधकबहुप्रमाणविरोधाच्च कर्तृत्वकर्मत्वयोरेकनिष्ठत्वे प्रमाणादर्शनाच्च । परमाप्नोतीतिनिर्देशस्य स्वरसार्थबाधेनान्यथानयनंतु तादात्विकप्रामाणिकभेदलाभेन निरस्तम् । इत्थञ्च परस्यापि परिशुद्धविषयइत्याद्युक्तिर्नयुक्तेति ।

तस्मात्सिद्धान्तसिद्धाञ्जनोक्तं सर्वं प्रमाणोपपत्तिविधुरं ग्रन्थविस्तरपामरवञ्चनादिफलकमेवेति सिद्धम् ।

इत्थंच प्रमाणान्तरानुगुणोपवर्णितस्वरसार्थिकायाः अस्याः श्रुतेः, यथाश्रुतेऽनन्वयादिपराहतस्य सोऽनुतेसकलानितिश्लोकस्य चोपबृंहणीयोपबृंहणभावाभावे, पूर्वैरनुदाहरणादविश्वसनीयत्वेच सिद्धेऽपि विश्वसनीयत्वाऽऽग्रहे प्रमाणान्तराविरुद्धो यःकश्चिदर्थो वक्तव्यः । सोऽयमुच्यते ।

स ब्रह्मोपासको जीवन्नपि एतद्देहविशिष्टोपि मुक्तस्सर्वं ब्रह्मशरीरत्वेन ब्रह्मात्मकमित्यनुसंदधानस्ततएव कस्यापि वस्तुनस्स्वनिष्ठत्वानुसंधानाभावेन कस्मिन्नपि रागद्वेषरहितस्सकलकल्याणगुणाकरब्रह्मानुभवैकपरस्ततएव मुक्ततुल्यः, विदितब्रह्मरूपेण विदितमहरहर्योगकालेव्युत्थानकाले च निध्यातं यद्ब्रह्मणो रूपं दिव्यमङ्गलविग्रहस्तेन हेतुना दिव्यमङ्गलविग्रहविशिष्टब्रह्मवेदनेनेतियावत् । सकलान् पशुपुत्रादीनैहिकान् शास्त्राविरुद्धान् स्वस्येच्छाऽभावेपि "भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायिनां पुंसामपवर्गप्रदो हरिः"इत्युक्तरीत्या भगवतैव प्रीतिपरवशेन दत्तानक्रमेण युगपदश्नुते तत्र नसंशयः कार्यइति ; मुक्त्यनुभवदृढीकरणे वाक्यतात्पर्यम् । यद्वा

मुक्तस्त्यक्तसांसारिकजीवनो विदितब्रह्मरूपेण जीवन् ब्रह्मरूपदर्शनलब्धात्मजीवनःनिध्यातब्रह्मस्वरूपसलक्षणाप्राकृतरूपलाभेन कैङ्कर्यवृत्त्या जीवन् सर्वान् कामान्युगपदश्नुतइत्यत्र नसंशय इति । अत्राप्राकृतदेशविशेषतत्प्रापकार्चिरादिमार्गमुक्तकर्तृकतत्रत्यपरिपूर्णब्रह्मानुभवाप्राकृतदेहप्राप्तितदधीनबहुविधकैङ्कर्यदेशविशेषापादानकपुनरावृत्त्यभावादिप्रतिपादकबहुप्रमाणविरुद्धार्थवर्णनापेक्षयोक्तएवार्थस्तदनुगुणो ग्राह्य इति ध्येयम् । नच पूर्वोक्तंसगुणोपासनफलमिति शङ्क्यम् । ब्रह्मद्वैविध्ये प्रमाणाभावस्य शतशः पूर्वैरुक्तत्वादिति ।

यदप्युक्तं तस्माद्वाएतस्मादित्यादिना वस्तुपरिच्छेदराहित्यरूपानन्त्योपपादनाय ब्रह्मणि प्रपञ्चाध्यारोपः क्रियत इति । तत्तुच्छम् । अध्यारोपस्यापवादस्य वाऽत्र प्रकरणे मात्रयाप्यप्रतीतेः । स्वेच्छया तथाङ्गीकारे माध्यमिकेन स्वाभिमतसर्वशून्यत्वोपपादनपरतया प्रकरणनयने निवारकाभावात् । न तत्पक्षानुगुणं प्रकरणमितिचेत् त्वत्पक्षेपि तथैवेति विभावय । नह्यत्र वस्तुतश्शुक्तिकामुद्दिश्येदंरजतमितिवद्वस्तुतो निर्विशेषंब्रह्मोद्दिश्यायं प्रपञ्चइत्यध्यारोप उक्त उपलभ्यते । नवा नेदंरजत मपितुशुक्तिकेतिवन्नायंप्रपञ्चोपितुब्रह्मेति । एवमेवाध्यारोपापवादस्थलेषु सर्वत्र दर्शनात् । तयोरत्र विवक्षितत्वे तथैव निर्देष्टव्यत्वात् । अत्रत्वात्मन आकाशस्संभूत आकाशाद्वायुस्संभूतइत्येवंरीत्या निर्देशादाकाशाद्युपादानत्वमुक्तमिति प्रतीयते । मृत्पिण्डात् कपालमुत्पद्यते, कपालाद्घट उत्पद्यत इतिवत् । नह्यध्यारोपस्थले शुक्तिकायारजतमुत्पद्यते रज्ज्वास्सर्पउत्पद्यतइति निर्देशः कुत्रापि केनापि कदाप्युपलब्धचरः । त्वयाप्यत्रोपादानत्वमुच्यत इत्यभ्युपगम्यते । तत्प्रति तस्योपादानत्वं च तन्निष्ठावस्थाविशेषपूर्वभाव्यवस्थाविशेषवत्त्वमिति लोकसिद्धम् । मृत्पिण्डहिरण्यलोहादिषु तथैव दर्शनात् । तत्र घटत्वकटकत्व-

कटाहत्वाद्यवस्थाविशेषपूर्वभाविपिण्डत्वहिरण्यलोहखण्डत्वाद्यवस्थाविशेषवत्त्वंहि पिण्डहिरण्यलोहखण्डादीनामुपलभ्यते । तदेवोपादानत्वमिति च व्यवह्रियते । नहि रजतसर्पादिकंप्रति शुक्तिरज्ज्वादीनामुपादानत्वं त्वदन्योऽनुमन्येत । तल्लक्षणाभावात् । अध्यासाधिष्ठानत्वमुपादानत्वमितितु स्वाभिमतार्थसाधनप्रत्याशया निर्मितमपूर्वलक्षणम् । मृत्पिण्डादिषु तदभावात् ।

ननु कार्याधारत्वेसति कार्यजनिहेतुत्वरूपंस्वात्मनि कार्यजनिहेतुत्वं, स्वाभिन्नकार्यजनकत्वंवा तल्लक्षणम् । इदंच घटापेक्षया मृदइव रजतापेक्षया शुक्तेः प्रपञ्चापेक्षया ब्रह्मणश्च संभवत्येव । अत्र निमित्तकारणवारणाय विशेषणम् । भूतलादिवारणाय विशेष्यम् । स्वपदं जगत्परिणाम्युपादानभूताज्ञानपरं, जगद्विवर्तोपादानभूतब्रह्मपरंच । जडोघट इत्याद्यनुभवेन घटादेरज्ञानाभेदस्य, सन्घटइत्यादिप्रतीत्या सद्रूपब्रह्माभेदस्यच सिद्ध्या लक्षणोपपत्तिरितिचेन्न । असंभवात् । तथाहिः—प्रथमलक्षणंतावत्कालेऽतिव्याप्तम्, तस्य ब्रह्मणइव कार्यसामान्यकारणत्वादाधारत्वाच्च । तथा देशस्यापि कार्यंप्रति कारणतया. अपत्यंप्रति मातुस्तद्गर्भाशयादेर्मत्स्यादिकंप्रति जलस्य घटादिकंप्रति चक्रादेश्चोपादानत्वापत्तिः । विलक्षणाधारत्वविवक्षणेच विशेष्यदलवैयर्थ्यम् । एवमतिरिक्तावयव्यनङ्गीकारान्मृदादेर्घटादिकार्याधारत्वाभावादव्याप्तंच । अवस्थामात्रस्यकार्यत्वाङ्गीकारेण धर्मिणि कार्याधारत्ववर्णने तुल्ययुक्त्यावस्थामात्रस्यैव कारणत्वापत्त्या धर्मिणि कार्यजनिहेतुत्वमसंभवि । भूतलादेर्घटाद्यवस्थाधारत्वाभावात्तद्वारकद्वितीयदलवैयर्थ्यञ्च । अज्ञानपरिणामभूतजगदवस्थाधारत्वस्य ब्रह्मण्यसंभवश्च । किंच असत्यस्य सत्यकार्यतायास्सत्याभेदस्यचासंभवात्, लोकवेदयोस्तथाव्यवहाराभावाच्चानयोर्लक्षणयोश्शुक्तिब्रह्मणोस्संगमनं दुष्करम् । नहि रजतं शुक्तिकार्यं शुक्त्यभिन्नमिति लोके प्रतीतिव्यवहारौ ।

किंच विवर्तोपादानत्वस्य कस्यचिदन्यादृशस्य श्रुतिस्मृतिसूत्रेषु क्वचिदपि कोणेऽनाघ्राततयोपादानद्वैविध्यस्यैव सगुणनिर्गुणब्रह्मद्वैविध्यवत्स्वेच्छामात्रपरिकल्पितत्वेनाप्रसिद्धनया लक्षणघटकस्वपदेन त्वदभिमतब्रह्मग्रहणासंभवात्सूक्ष्मप्रपञ्चविशिष्टस्यब्रह्मणस्तादृशप्रपञ्चमात्रस्यवा कारणत्वेन प्रमाणप्रतिपन्नस्यैव ग्राह्यत्वावश्यंभावइति न त्वदिष्टसिद्धिः । अपिच घटादेरेकस्याज्ञानब्रह्मोभयाभेदाभ्युपगमे तदभिन्नाभिन्नं तदभिन्नमितिन्यायेनाज्ञानब्रह्मणोरभेदप्रसंगः । एवं सन्घट इत्यादौ सत्पदार्थस्य स्वरूपात्मकब्रह्मरूपत्वं केनोपदिष्टं तव ?

रज्जुवत्तस्यानुवृत्तेस्सत्यत्वावगमादितिचेदसन्घटोऽसन्पटइत्यसताप्यनुवृत्त्या तस्यापि तत्त्वं कुतो नेष्यते ? अतस्सन्घट इत्यादौ सत्पदार्थस्य स्वरूपरूपत्वे प्रमाणयुक्त्योर्लेशस्याप्यसंभवेन घटपदेन घटत्वरूपधर्मस्येव तत्समानाधिकरणसत्पदेन प्रमाणसंबन्धार्हत्वादिरूपसत्त्वात्मकधर्मस्यैव वाच्यतायाअवश्याङ्गीकार्यतया तथैव लोके व्युत्पत्तेश्च न तादृशव्यवहारमादाय लक्षणसंगमनं शक्यशङ्कम् । एतेन सदेवसोम्येदमासीदितिश्रुत्या ब्रह्मणस्सद्रूपत्वावगतेस्तदेव सन्घटइत्यादौ घटेप्रतीयतइत्यभ्युपगन्तुं युक्तम् । मृद्घट इत्यादौ घटे कारणगतमृत्त्वमिवेति निरस्तम् । परिणामे दृष्टस्य विवर्ते वर्णनासंभवात्, सच्छब्दस्य ब्रह्मार्थकत्वे ब्रह्म घटइति प्रतीतेरिव सन्घट इतिप्रतीतेरसंभवप्रसंगाच्च । नहि रजतमध्यस्यतः पुंस इदंरजतमितिवत् शुक्तीरजतमिति प्रतीतिस्संभवति । यदि शुक्तीरजतमिति बाधार्थसामानाधिकरण्यं दृष्टमिति शङ्क्यते, तर्हि तुल्यनयात् सन्घटइति प्रतीतिरपि बाधज्ञानमेव स्यादिति नास्याःप्रतीतेस्सद्रूपतागमकत्वम् । नच सच्छब्दार्थे घटःकल्पितइत्येवमर्थं सन्घटइत्यतो जगति कश्चिदपि प्रत्येति । अतस्सत्त्वं ब्रह्मघटपटादिसर्वानुगतः पूर्वोक्तःकश्चिद्धर्म इत्येवानुभविकं त्वयापि स्वीकर्तव्यमिति सर्वथा न ब्रह्माभेदसंभावनेति ।

किञ्चात्मन आकाशस्संभूतइति वचनव्यक्तौकेनोपायेनात्मन्याकाशो-ध्यस्त इत्यर्थस्संपाद्यते । नकेनापि, अध्यासवाचकपदाभावात्, तदनुगुण-सप्तम्यश्रवणाच्च । ननु नाध्यासो वाच्यार्थः अपितूत्तरत्र यतोवाचइत्यादिना प्रपञ्चनिषेधदर्शनात् तन्निषेधकप्रमाणान्तरानुसाराच्च तस्यात्र विवक्षितत्वंगम्यत इत्येतावदुच्यत इतिचेन्न । प्रथमप्रतीतयथाश्रुतार्थाविरोधेनैव यतोवाच इत्यादेस्सुखंनिर्वाहसंभवात्तदनुरोधेनैतदन्यथाकरणस्यान्याय्यत्वात् । तस्यवचनस्य त्वदभिमतप्रमाणान्तरस्यच तन्निषेधकत्वासंभवस्य सुष्टूपपादयिष्यमाणत्वाच्च । अपिचात्राकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यःपृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुष इत्युच्यमाने ब्रह्मणि सर्वप्रपञ्चाध्यासो भवदिष्टः कथं सिद्ध्येत्? किं प्रथमान्ताः पञ्चम्यन्ताश्चाकाशवाय्वादिशब्दा अध्यस्ताकाशादिमात्रबोधकाः उताकाशादिभावापन्नब्रह्मबोधकाः? आद्ये ब्रह्मण आकाशाधिष्ठानत्वमात्रं सिद्ध्यति, न वाय्वाद्यधिष्ठानत्वम्, तस्याकाशादावेव प्रतीतेः । अन्त्येऽपि किं ब्रह्मण आकाशभावापत्तिराकाशरूपेण परिणामः? उत तदात्मतयाऽवस्थानम्? अथवा तदनुगतत्वमात्रमेव? न प्रथमः; "सत्यं ज्ञान"मिति निर्विकारत्वश्रुतिविरोधात्; तथाङ्गीकारे मृत्परिणाम-भूतघटादेरिवाऽऽकाशादीनां सत्यत्वापत्तेश्च । न द्वितीयः; त्वत्पक्षे शुक्तिकायां रजतस्येव ब्रह्मण्याकाशादीनामध्यस्तत्वाङ्गीकारेण तत्प्रति तस्या इवाकाशादिकं-प्रति ब्रह्मण आत्मत्वायोगात् । नहि रजतस्यात्मभूता शुक्तिकेति कश्चित्प्रत्येति । अपितु सादृश्याच्छुक्तिं रजततया भ्राम्यतीति । एतेन "वायोरात्मभूताद्ब्रह्मण"इति, "वायोरात्मभूतं ब्रह्म"ति च शास्त्रदर्पणोक्ति-र्निरस्ता । नच शङ्क्यं शुक्तेरचेतनत्वेन रजतं प्रत्यात्मत्वानुपपत्तावपि ब्रह्मणश्चेतनस्य प्रपञ्चंप्रति तत्त्वे को दोष इति; त्वत्पक्षे ब्रह्मणोप्यचेतनत्वेन

शुक्त्यविशेषात् । नहि चैतन्यविशिष्टं ब्रह्मेत्यभ्युपगम्यते, अपितु चैतन्यरूपमिति । अपिचाध्यासाधिष्ठानत्वातिरिक्तस्यान्तःप्रविश्यनियन्तृत्वादिरूपस्यात्मत्वस्य शुद्धब्रह्मण्यसंभवात्तस्य तत्त्वमेवात्मत्वमेष्टव्यमिति चैतन्याचैतन्यविचारोऽनर्थकः। तर्हि तदेवात्मत्वमस्त्वितिचेत् शुक्तिकादिष्वदर्शनात्तस्य तत्त्वव्यवहारो न संभवतीत्युक्तम् । अत एव न तृतीयः । अतो यदुक्तं तेजोधिकरणकल्पतरौ ब्रह्मवाय्वोरभेदाभिदानं वायौ कारणत्वेनानुगतं यद्ब्रह्मरूपं तदभिप्रायम्, न तु विकारांशाभिप्रायम्, अव्यक्तस्य तस्य तात्त्विकब्रह्माभेदायोगादिति ; तदप्यनेन परास्तम् । अध्यासपक्षे घटादौ मृद्रूपस्येव वाय्वादौ ब्रह्मरूपस्यानुवृत्तिरूपानुगमायोगात् । नहि रजते शुक्तिकानुगमः केनापि दृष्टः। तथा सति मृदयं घट इतिवत् शुक्तिकेदं रजतमिति तात्त्विकव्यवहारप्रसङ्गात् । एतेन तदभिध्यानाधिकरणपरिमले सकलचेतनाचेतनप्रपञ्चविवर्ताधिष्ठानं सर्वविकारानुगतं यन्निर्विशेषं तेन रूपेणाकाशानुगतेन सता वायूपादानत्वमित्युक्तमप्यपास्तम् ।

किञ्चाकाशात्मकविकाररूपस्य तादृशविकारावच्छिन्नस्य वा ब्रह्मणो न वायूपादानत्वम्, तयोः कल्पितत्वेनाध्यासाधिष्ठानत्वायोगादिति वदता कथमाकाशानुगतस्याधिष्ठानत्वमभ्युपगम्यते ब्रह्मणोप्यसत्यविकारसंबन्धादेव हि कल्पितत्वमभिमतम् । स इदानीमप्यवर्जनीयः । विकारसंबन्धस्याप्रहाणात् । अवच्छिन्नानुगतपदवैषम्यमात्रेण तदपलापायोगात् । विकारानुगतत्वं तदनुवृत्तत्वमेव खल्वभिप्रेतम् । अत एव हि परस्परव्यावृत्तेनाकाशादिविकारावच्छिन्नेन रूपेण नोपादानत्वमित्यत्रैवोक्तम् । एवञ्च तदनुवृत्तस्य तत्संबन्धाभावं कस्साधयेत् । यद्यसंबन्ध इष्यते तर्ह्याकाशानुगतब्रह्मणो वाय्वाद्यनुगतब्रह्मणश्च मात्रयापि भेदाभावेन निर्विशेषस्यैकरूपस्यैव ब्रह्मण

आकाशादिसर्वविकाराध्यासाधिष्ठानत्वस्य फलिततयाऽऽत्मनस्सर्वमित्येकोक्त्यैव सर्वसामञ्जस्येन "आकाशाद्वायुः वायोरग्नि"रित्येवंरीत्या वचनप्रवृत्तिर्व्यर्थैव स्यात् ।

किञ्च सर्वथासंबन्धाभावे वाय्वाद्यनुगतब्रह्मणोप्याकाशोत्पत्तिर्वक्तव्या स्यात्, असंबन्धसाम्यात् । ननु ब्रह्मण्याकाशाध्यासानन्तरं वाय्वध्यास इति श्रुत्यर्थ इति चेन्न । प्रतिपुरुषं जायमानस्य वाय्वध्यासस्याकाशाध्यासानन्तर्यनियमाभावात् । वाय्वध्यासानन्तरमप्याकाशाध्याससंभवात् । एकाध्यासस्यापराध्यासंप्रत्यहेतुत्वात् । किञ्चेवंश्रुतेरानन्तर्यप्रतिपादनैदम्पर्याङ्गीकारेण ब्रह्मण एव सर्वाध्यासाधिष्ठानत्वोक्तौ तेजोधिकरणविरोधः । तत्र हि वायोरूर्ध्वमग्निरुत्पद्यत इत्यर्थपरत्वं पूर्वपक्षयित्वा तत्परिहारेण केवलब्रह्मणस्सर्वोपादानत्वानङ्गीकारेणोपादानोपादेयभावपरत्वं श्रुतेर्भापितम् । परिमले चोक्तम्, 'तच्च वायुरूपविकारानुगतस्य ब्रह्मणोऽधिष्ठानत्व एवोपपद्यते, न विकारान्तरानुगतस्य केवलस्य वेति । इत्थञ्च विकारावच्छिन्नस्यैव तदनुगतस्यापि तत्संबन्धाभ्युपगमस्यावश्यकतया त्वद्रीत्या तस्य काल्पनिकत्वावश्यम्भावादध्यस्तस्याधिष्ठानत्वायोग इति त्वदीयोक्तेश्चाधिष्ठानत्वासंभव एव ।

अपिच प्रथमान्तपञ्चम्यन्तयोस्समानार्थकतया, आकाशाद्वायुरित्यत्राकाशपदस्याऽऽकाशभावापन्नब्रह्मपरत्वं न संभवति ; अस्याकाशपदार्थस्याकाशस्संभूत इत्यत्रात्मन्यध्यस्तत्वेनाधिष्ठानत्वायोगात् । ब्रह्मण्येव ब्रह्मणोध्यस्तत्वासंभवेनात्मनआकाश इति वाक्यार्थासामञ्जस्यं च । नचवाच्यं प्रथमान्तेमाकाशपदमाकाशमात्रपरमिति ; पूर्वपूर्वस्यैवोत्तरोत्तरोपादानत्वप्रतीतिस्वारस्ये तद्बाधायोगात् । अथोच्येत **परिमले**, 'पञ्चम्यन्ताकाशादिपदानामाकाशाद्यनुगतब्रह्मपरत्वे लक्षणा, प्रथमान्ताकाशादिपदार्थवैरूप्यञ्च ;

तेषां विकारमात्रपरत्वा'दित्याशङ्क्य "आकाशाद्वायु"रित्यादौ केवलाकाशाद्वायुरुत्पन्न इत्येव वाच्यार्थाङ्गीकारात् । आकाशादिविकारानुगतं ब्रह्म वाय्वाद्यधिष्ठानमितितु सच्चत्यच्चाभवदित्यादिश्रुत्या ब्रह्मणस्सर्वप्रपञ्चाध्यासाधिष्ठानत्वबोधनेन फलतस्सिद्ध्यती"त्युक्तम् । अतो न दोष इति । तदप्यत्यन्तानुपपन्नम् । सच्च त्यच्चाभवदिति वाक्यस्याध्यासपरत्वेपि ब्रह्मणस्सर्वाध्यासाधिष्ठानत्वमात्रस्यैव लाभेनाकाशाद्यनुगतब्रह्मणो वाय्वाद्यध्यासाधिष्ठानत्वरूपविशेषालाभात् । वस्तुतस्तस्यान्यार्थकत्वाच्च । तत्सृष्ट्वा तदनुप्रविश्य तदभवदित्युक्ते केनपदेन कया वृत्त्या ब्रह्म चेतनाचेतनात्मप्रपञ्चाध्यासाधिष्ठानमभवदित्यर्थो वाक्यात्प्रतीयते ? अनुप्रविशतिना शक्त्येतिचेन्न, नह्ययमध्यासवचनः । सत्त्यच्छब्दाभ्यामितिचेत् किं तौ चेतनाचेतनरूपविकारमात्रवाचकौ, उत तदनुगतब्रह्मवाचकौ ? नाद्यः सत्यासत्ययोरभेदायोगादेव, अध्यस्तस्य तात्त्विकब्रह्माभेदायोगादिति त्वयैवोक्तत्वाच्च अवाचकत्वाच्च न द्वितीयः । एतेन सदादिपदं तदधिष्ठानपरम् । अतस्सामानाधिकरण्योपपत्तिरित्यपि प्रत्युक्तम् । लक्षणया प्रतीयत इतिचेन्न ; आकाशाद्वायुरित्यादावाकाशानुगतब्रह्मण एव वाय्वाद्युपादानत्वं फलतस्सिद्ध्यतीति प्रतिज्ञाय तत्साधकतयाऽवष्टब्धस्य वाक्यस्य लक्षणादिना स्वाभिमतार्थकत्ववर्णनस्य परिहास्यत्वात् । स्पष्टार्थकं खल्वन्वेषणीयम् । नह्याप्रलयमन्विष्यन्नपि तादृशं वाक्यमुपलप्स्यसे, यल्लक्षणादिकं विनैव ब्रह्मणस्सर्वप्रपञ्चाध्यासाधिष्ठानत्वबोधनसमर्थम् । अपिच वाच्यार्थे कोवा बाधः ? प्रपञ्चाभेदो ब्रह्मणि बाधित इतिचेत्, "तत्सृष्ट्वातदेवानुप्राविशत्तदनुप्रविश्ये"त्युक्ताभ्यां सृष्टिकर्मत्वप्रवेशकर्मत्वाभ्यां प्रपञ्चस्य सत्यत्वावगमेन त्वदुक्तलक्ष्यार्थोपि बाधित एव । नहि शुक्तिका रजतं सृष्ट्वा रजतमनुप्रविश्य रजतमभवदिति

व्यवहरस्त्वयापि कुत्रचिद्दृष्टचरः । इत्थञ्चाबाधितार्थेन्विष्यमाणे सर्वप्रमाण-लौकिकव्यवहारानुगुणार्थलाभे स एव वक्तव्यः । सोऽयमुच्यते । अत्र तदनुप्रविश्य तदभवदित्युक्त्या तद्भावापत्तिं प्रति तदनुप्रवेशस्य हेतुत्वं प्रतीयते, स्नात्वा शुद्धोभवत्, अमृतं पीत्वाऽजरोभवत्, विषं पीत्वा मृतोऽभवदित्यादौ तथा प्रतीतेः। तद्धेतुकाच तद्भावापत्तिर्न तद्वस्तुत्वापत्तिरूपा। कस्यचित्कस्मिंश्चिदनुप्रवेशमात्रेण तत्त्वापत्त्यसंभवात् । इत्थञ्च तयोर्भेदे सत्येव तद्भावापत्तौ वर्णनीयायां, 'अवस्थितेरिति काशकृत्स्न'इत्युक्तरीत्या भगवतस्सर्वेषुवस्तुषु नियन्तृतयाऽऽत्मत्वेनावस्थानात्सर्वेषांच भगवन्तंप्रति शरीरत्वेनापृथक्सिद्धविशेषणत्वादपृथक्सिद्धवस्तुवाचकशब्दानां विशेष्यपर्यन्त-बोधकत्वस्याऽऽकृतिन्यायेन ब्राह्मणोहं जानामीत्यबाधितलौकिकव्यवहारेण च सिद्धतया तत्रतत्र तंत्तद्वस्तुवाचकशब्दस्य भगवद्वाचकशब्दस्यच सामानाधिकरण्यमित्ययमेवार्थइह प्रदर्श्यत इति तच्छरीरकत्वापत्तिरेव तद्भावा-पत्तिरित्युपवर्णयितुं युक्तम् । एतच्छ्रुत्यर्थएव 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः । आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । सर्वं समाप्नोषि ततोऽसि सर्वः । सर्वगत्वादनन्तस्य सएवाहमवस्थितः ।' इत्यादि-स्मृतिभिरपि प्रपञ्च्यते । उभयत्र सामानाधिकरण्यव्यवहारस्यात्मत्वेनानु-प्रवेशमूलकत्वप्रतीतेः । तस्मात् तत्सृष्ट्वेत्यादिना सृज्यवर्गस्य सत्यत्वावगमात्सर्वं-समाप्नोषीत्यादिना सर्वसामानाधिकरण्यस्य परमात्मव्याप्तिनिबन्धनतायांस्सु-स्पष्टमुक्तेस्सर्वेषामपि भगवच्छरीरत्वस्य यस्यात्मशरीरमित्यादिश्रुतिशतसिद्ध-त्वाच्चावस्थितेरितिसूत्रोक्तं शरीरात्मभावनिबन्धनं सामानाधिकरण्यमेवात्र मुख्यं स्वहृदयसाक्षिकमङ्गीकार्यम् । नपुनर्बहुस्यांप्रजायेयेत्युपक्रमाविरुद्धं वचनलेशदुर्गतं सृज्यसत्यत्वविरोधि अनुप्रवेशहेतुकत्वगन्धरहितमध्यासनिबन्धनमस्वरसममुख्य-

मिति । नहि बहुस्यामिति संकल्पो मिथ्यापदार्थरूपेण बहुभवनविषयकस्संभवति, ब्रह्मणि मिथ्यापदार्थाभेदायोगात् । नहि सत्यस्यामत्याभेदसंभवः । तस्मात् सच्चत्यच्चाभवदित्यादेः कथमपि त्वदभिमतार्थबोधकत्वासंभवात्तदनुरोधेनाकाशाद्वायुरित्यत्रार्थवर्णनं सुतरामनुपपन्नमिति सिद्धम् ।

किञ्चाकाशाद्वायुरित्यादेः प्रकरणस्य ब्रह्मणि प्रपञ्चारोपपरत्वाङ्गीकारो नोपपद्यते । पारमार्थिकशुक्तिकाद्यधिष्ठानविज्ञानादध्यस्तसमस्तप्रपञ्चविलयो युगपज्जायते । सएव समस्तप्रपञ्चराहित्येनाखण्डानन्दरूपेण प्रत्यगात्मनोऽवस्थानात्मिका मुक्तिरिति खलु तव मतम् । तच्चैवंसति नसिद्ध्यति । आकाशाद्वायुः वायोरग्निरित्यादितः क्रमेणैव ब्रह्मणि तत्तत्पदार्थाध्याससिद्ध्या तत्तदधिष्ठानज्ञानस्यापि क्रमिकत्वावश्यम्भावेनाबनुगतब्रह्मरूपाधिष्ठानज्ञानात्पृथिवीविनाशः, अग्न्यनुगतब्रह्मज्ञानादग्नाश इत्येवंरीत्या बहूनामधिष्ठानज्ञानानां क्रमेण वाय्वादिप्रपञ्चविनाशहेतुत्वापत्तेः । नहि शुक्तिकारूपैकाधिष्ठानज्ञानादेव सर्पादिनिवृत्तिर्दृश्यते । तथाच क्रमिकाध्यासाङ्गीकारे 'विपर्ययेण तु क्रम'इति सूत्रोक्तोऽप्ययक्रमोप्यध्यस्तनिवृत्तिक्रमरूपएव स्वीकार्यः । सर्वाधिष्ठानस्य निर्विशेषब्रह्मण एकस्य ज्ञानादेव सर्वनिवृत्तेस्त्वया त्वदीयैश्चाभ्युपगमान्नात्रेष्टापत्तिस्संभवति । इत्थञ्च ते तत्तदधिकरणविरोधोपि दुष्परिहरः । यदि विनाशो निवृत्तेरन्यस्तर्हि तुल्यन्यायेन सृष्टिरप्यध्यासो नस्यात् । तस्मादात्मन आकाशस्संभूत इत्यादिप्रकरणस्याध्यासपरत्वमसंभवदुक्तिकमिति ।

यदप्युक्तम्, एवमारोपितस्य प्रपञ्चस्य यतोवाचइत्यादिनापवादः क्रियतइति तदप्यसंगतम् । तस्य वाक्यस्यारोपितप्रपञ्चाध्यासपरत्वासंभवात् । मनसासह वाचो यत आनन्दादियत्तारूपं पारमप्राप्यनिवर्तन्ते तं ब्रह्मण

आनन्दं विद्वान्कुनेश्चन न बिभेतीति खल्वस्यार्थस्स्वरसतः प्रतीयते । नकेवलं स्वारस्यात्, अपितूपक्रमानुरोधात्प्रकरणगततत्तद्वाक्यपरामर्शादुपरितनवाक्यानुगुण्याच्छ्रुत्यन्तरैकार्थ्यात्प्रमाणान्तराबाधाच्चायमर्थोवसीयते, नतु त्वदुक्ता ब्रह्मण्यारोपितप्रपञ्चापवादपरता ।

योयमेतद्वाक्यस्य सदृष्टान्तमर्थस्त्वयोक्त स्सतावद्विचारणीयः । यथेदंरजतमितिव्यवहारश्शुक्तित्वपर्यन्तमप्राप्य नेदंरजनमितिबाधान्निवर्ततइति त्वदीयवाक्यस्य कोवार्थः ? किंवा तात्पर्यम् ? कथंवा त्वदभिमतार्थसाधकतेति । नहि लोक इदं रजनमिनि व्यवहारश्शुक्तित्वमाप्त्यपेक्षया प्रवृत्तो दृश्यते । प्रत्युत स व्यवहारश्शुक्तित्वज्ञानेसति न प्रवर्तते । अधिष्ठानगतासाधारणधर्मज्ञानस्य तद्विरुद्धधर्मारोपात्मकभ्रमविरोधित्वात् । एवं दार्ष्टान्तिकेपि सन्घटइत्यादिव्यवहारो नाखण्डाकारप्राप्त्यपेक्षया प्रवृत्तो दृश्यते । अयमत्रेदानीं सन्घटं इत्याद्यबाधितपरीक्षकव्यवहारात् देशविशेषे कालविशेषेच सत्त्वस्य घटादौ बोधनतात्पर्येणैव तादृशव्यवहारप्रवृत्तेस्सर्वलोकसाक्षिकत्वात् । अतस्सर्वात्मनाऽप्राप्येतत्त्वदभिमतार्थे न संगच्छते ।

एतदुक्तंभवति—लोके देवदत्तस्तटाकपर्यन्तमगत्वा तटाके सलिलंनास्तीति केनचिदुक्ते निवर्ततइत्युक्तौ प्रवृत्तेस्तटाकपर्यन्तगोचरत्वं मध्ये तत्रापेक्षितनाभावज्ञाने निवृत्तिश्च यथा प्रतीयते, तद्वत्प्रकृते सन्घटइत्यादिव्यवहारप्रवृत्तेरखण्डाकारपर्यन्तगोचरत्वमथातआदेशोनेतिनेतीति निषेधशास्त्रेण तदभावज्ञाने तदप्राप्य मध्येनिवृत्तिश्च त्वदुक्तिपरिपाट्या सहृदयहृदयसाक्षिकं प्रतीयते । एतच्चासंगतम् । व्यवहारप्रवृत्तेरखण्डाकारपर्यन्तगोचरत्वस्यासंभवात्, नेतिनेतीत्यस्य प्रपञ्चनिषेधकत्वस्यैव त्वदभिमतत्वात् । अखण्डाकारनिषेधकत्वे माध्यमिकपक्षपातप्रसंगाच्च । तेनाध्यस्तप्रपञ्चनिषेधे सदात्मकतया घटादि-

व्यवहारो निवर्तते व्यवहार्याभावादित्यर्थइतिचेत् तर्ह्यप्राप्येत्येतन्निरर्थकम् । घटपटादिवस्तुस्वरूपमप्राप्येति वा व्याख्येयं स्यात् । प्रपञ्चबाधज्ञानवतस्तद्व्यवहारासंभवात्मनिवर्तने, नपुरुदेतीति तात्पर्यवर्णनमसंभवात् । तस्मादप्राप्येत्येतत् त्वत्कृतं तद्व्याख्यानंवा सर्वथाऽसंगतमिति ।

किञ्च सन्घटइति व्यवहारस्य ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखित्वकथनमसंगतम् । तथासति ब्रह्मवाचकसत्पदप्रयोगासंभवात् । तस्य तद्वाचकत्वं हि त्वदभिमतम् । नचाध्यासस्थले तत्प्रयोगउपपद्यते भ्रमोपमर्दप्रसंगस्योक्तत्वात् । इत्थञ्चसकललौकिकपरीक्षकप्रामाणिकपुरुषरीत्या प्रमाणसंबन्धित्वादिरूपसत्ताधर्माश्रयो घट इति सन्घटइत्यत्र बोधः । विलक्षणव्युत्पत्तिशालिरीत्यातु निर्विशेषब्रह्माधिष्ठानको घट इति घटाधिष्ठानं ब्रह्मेति अधिष्ठानतया घटानुगतं ब्रह्मेतिवा बोधो वाच्य इति स्थिते कारीतिमनुसृत्यायमर्थ उच्यते ? किञ्च "ब्रह्मज्ञाने प्रतीयमानस्य ब्रह्मरूपस्यैव सतस्सन्घटइत्यादिप्रतीतिष्ववभाससंभवे तदतिरिक्तसत्ताजात्यादिकल्पनाऽयोगा"दित्यादि वदता त्वयैवात्र त्वत्कृतार्थवर्णनस्य सूदूरपरिहृततया नास्माकं तत्र भरः । सन्घटइत्यत्र सदात्मना ब्रह्मज्ञानसिद्धिं वदतोऽयं व्यवहारोऽप्राप्यैवाखण्डाकारं निवर्ततइति वचनाय जिह्वाप्रवर्तनस्याप्ययोगात् । नच सन्घटइत्यादौ सतः केनचिदाकारेण ज्ञातत्वेप्याकारान्तरेणाज्ञततया नैतद्वाक्यार्थानुपपत्तिरिति वाच्यम् । शुक्तिकायास्सविशेषत्वेनेदन्त्वेन ज्ञानं शुक्तित्वेनाज्ञानमित्यस्य संभवेपि निर्विशेषब्रह्मणो ज्ञाताज्ञाताकारद्वयायोगेन तथावर्णनासंभवात् । काल्पनिकाकारमादाय तु नात्र निर्वाहः, त्वया निर्विशेषब्रह्मण एव घटपटाद्यनुगतत्वाङ्गीकारात् । तस्य सतो ज्ञातत्वे कयापि विधयाऽज्ञातत्वोपपादनायोगात् । 'निर्विशेषेण सता सर्वविकारानुगतेन' 'सच्चिदानन्दरूपस्य ब्रह्मणः प्रपञ्चे तादात्म्य'र्मात

हि त्वदुक्तिः। अपिचेदं रजनमिति व्यवहारस्य नेदंरजतमितिबाधेसति व्यवहार्याभावान्निवृत्तिवत् घटादिव्यवहाराणामप्यथातआदेशोनेतिनेतीत्यादि-श्रुत्या बाधे सति व्यवहार्याभावादेव निवृत्तिर्भविष्यतीति नास्य वाक्यस्य किञ्चित्प्रयोजनम्? नहि शुक्तिरजतस्थले इदंरजतमिति व्यवहारो निवर्ततइति कस्यचिद्वाक्यस्य प्रयोगोऽपेक्षावा दृश्यते। किञ्चैवमर्थवर्णने यतइति पञ्चम्यन्तस्यानन्दंब्रह्मणोविद्वानित्यस्यच कथमन्वयः? यस्माद्धेतोर्निवर्तन्ते तस्माद्ब्रह्मण आनन्दं विद्वानित्यस्य, यतोयस्माद्ब्रह्मणो वाचो निवर्तन्ते तस्य ब्रह्मण इत्यस्यचासामञ्जस्यात्, प्रत्युत विरुद्धत्वात्। त्वया निवृत्तेर्बाध-प्रयुक्तत्वाभ्युपगमात्। किंचास्य वाक्यस्य जगदपवदनतात्पर्यकत्वे पूर्वसंदर्भ-स्याव्यामपरत्वानुरोधेन 'न ब्रह्मणि घटादय'इति, न ब्रह्मप्रपञ्चइतिवा श्रूयेन। न वाचो निवर्तन्त इति वक्रोक्तिः। नहीदंरजतमिति भ्रमे वर्तमाने तन्निषेधाय रजतवाङ्निवर्तते इत्युक्तिर्युक्ता दृष्टा वा। अपिच पूर्वं धर्मभूतज्ञानपरिणामरूपप्रियमोदप्रमोदानन्दादिविविधसुखविशेषाश्रयतयाऽऽ-नन्दप्रचुरस्य कस्यचिदात्मन आनन्दमयपदवाच्यतायास्स्वरसप्रतीतौ "सैषा-नन्दस्य मीमांसाभवती"ति पूर्वप्रस्तुतानन्दविचारप्रस्तावे प्रतीयमाने शत-गुणितोत्तरक्रमेण कृतमीमांसाया ब्रह्मण आनन्दइति ब्रह्मसंबन्ध्यानन्देपर्यव-सानावगतौ, उपरिचानन्दंब्रह्मणोविद्वानिति आनन्दस्य ब्रह्मसंबन्धित्वश्रवणे-सति शतगुणितप्राजापत्यानन्दतुल्यत्वश्रवणप्रयुक्ता या ब्रह्मसंबन्ध्यानन्दस्य परिच्छिन्नत्वशंका तन्निवृत्त्यर्थं तस्य वाङ्मनसागोचरत्वकथनेनापरिच्छिन्नत्वं बोधयन्ती श्रुतिस्तादृशानन्दविशिष्टब्रह्मोपासनस्य सर्वभयनिवृत्तिफलकत्वं प्रतिपादयतीत्ययमर्थः कुतो नरोचते तुभ्यम्?

अत्राप्राप्यनिवर्तन्तइत्युक्त्या प्रवृत्तयोरेव वाङ्मनसयोरर्धपथे निवृत्ति-प्रतीतेरन्यस्य कस्यचिदानन्दपरिच्छेदविषयकस्य वाक्यस्य प्रवृत्तस्यादर्शनात्

प्रवृत्तस्य शतगुणितोत्तरक्रमेणोत्कर्षप्रतिपादकस्य तद्विषयस्यापि प्रवृत्तत्वादेव निवृत्त्यसंभवात्तथाविधार्थकत्वानुपपत्त्या मदुक्तार्थकमेवेदं वाक्यमेष्टव्यमितिचेद्- हो तव वाक्यार्थवर्णनकुशलता ! उपक्रमेतावत् ब्रह्मोपासकस्य परंब्रह्म प्राप्य- मित्यभिधाय तस्य प्राप्यत्वोपपत्त्यर्थं प्रचुरानन्दवत्त्वमन्योन्तरआत्माऽऽनन्दमय- इत्युक्त्वा तत्प्राचुर्यं कीदृशमित्यपेक्षायामपरिच्छिन्नत्वरूपं तदिति व्यङ्क्तुं सैषानन्दस्येत्यादिनाऽऽनन्दविचारं प्रस्तुत्य तदानन्दस्य शतगुणितप्राजापत्या- नन्दसादृश्यं द्योतयित्वा एतादृशानन्दविशिष्टं योवेदेतिहृदयगुहायामुपास्यत- योक्तं ब्रह्म कीदृशविग्रहविशिष्टं ? कोवा देवताविशेषइत्याकांक्षायां हिरण्यवदतिस्पृहणीयदिव्यविग्रहः पुण्डरीकाक्षस्सूर्यमण्डलान्तर्वर्तीश्रीमन्नारा- याणएव पूर्वोक्तंब्रह्मेति सयश्चायमित्यादिना प्रतिपाद्य मध्ये पूर्वोपक्षिप्तप्रश्नान् सयएवंविदित्यादिना प्रत्युच्यानन्दमीमांसाप्रयोजनं ब्रह्मानन्दप्राचुर्यस्यान- वच्छिन्नत्वरूपत्वमेवमपि नसिद्ध्यति, तस्य शतगुणितप्राजापत्यानन्दसाम्य- प्रतीत्या परिच्छिन्नत्वस्यैवसिद्धेरित्याक्षेपे पूर्वं सएको ब्रह्मणआनन्द- इत्युक्तिर्नशतगुणितप्राजापत्यानन्दानधिकत्वाभिप्राया अपित्विषुवद्गच्छति सवि- तेतिवदन्न्यूनत्वनिवृत्तिपरासती ततोप्याधिक्याभिप्राया । अतोऽपरिच्छिन्न- त्वसिद्धिर्निष्प्रत्यूहेति स्फोरणाय तस्यानन्दस्य वाङ्मनसागोचरत्वं प्रतिपाद- यतीदमिति किमत्र तव नोपपद्यते ।

एतदुक्तंभवति—नात्रश्रुतौ कस्यचिल्लौकिकस्य वैदिकस्यवा ब्रह्मा- नन्देयत्ताविषयकस्य प्रवृत्तस्य वचसो निवृत्तिरभिधीयते, येन त्वदीयशुष्क- गाधाऽवकाशं लभेत । अपितु यदि यत्किञ्चिद्वचोमनोवा ब्रह्मानन्द एतावानिति तदियत्तां वक्तुं स्मर्तुंवा प्रवर्तेत, तद्वचोमनोवा वस्तुतस्तस्य परिच्छेदाभावात्स्वमनोरथविषभूतं तदियत्तावचनं स्मरणंवाऽप्राप्यैव निवर्तेतेति

स्वबुद्ध्या तदियत्तालाभायप्रवृत्तत्वेनपरिकल्पितयोरेव वाङ्मनसयोस्तदभावा- न्निवृत्तिः परिकल्प्यतइति । आनन्दविषये स्वबुद्ध्या कस्यचित्परिकल्पनंच तेयेशतमन्येयेशनर्मिति पूर्वमपि बहुशो दृष्टम् । ततश्च ब्रह्मानन्दपरिच्छेदाय प्रवृत्तास्मन्तिचेत्ता यस्माद्ब्रह्मसंबन्धिनआनन्दात्तदभावान्निवर्तन्ते–निवर्तेरन् तादृशमनवच्छिन्नं ब्रह्मण आनन्दं विद्वान्नबिभेतीति वाच्योऽर्थ इति । वस्तुतो वाचइत्यनेन सैषानन्दस्येत्यादेस्सएकोब्रह्मणआनन्दइत्यन्तस्य संदर्भस्य ग्रहणेपि न दोषगन्धः । ब्रह्मानन्दातिशयेयत्तां वक्तुमुद्यतं यत्पूर्वोक्तं वचस्तन्मनसामह यस्मादानन्दादियत्तायाअभावादर्धपथे निवर्तते तमानन्द- मित्याद्यबाधितान्वयसंभवात् । ननु तस्य प्रवृत्तत्वादेव निवृत्तिर्न संभवती- त्युक्तमितिचेन्न तस्य दुरुक्तत्वात् प्रवृत्तांशस्य निवृत्त्यभावेप्यभिलषिताया आनन्दातिशयावधिलाभपर्यन्तायाः पूर्णप्रवृत्तेर्वैफल्यादर्धपथे निवृत्तिकथनस्य निराबाधत्वात्। नहि सैषेत्यादिवाक्यस्य ब्रह्मानन्दस्य शतगुणितप्राजापत्यानन्द- साम्यद्योतनपर्यन्तमेव प्रवृत्तिविवक्षोचिता । अपि तु तस्य चरमावधिप्राप्ति- पर्यन्तम् । तथाविधप्रवृत्तेरेव पूर्णत्वात् । पूर्णप्रवृत्तेरेव लोकन्यायेन विवक्षौचित्यात् । इत्थञ्च ब्रह्मनन्दस्य तादृशानन्दतुल्यत्वं पर्वक्रमेण प्रतिपादयन्ती साश्रुतिस्तदानन्दतत्त्वं पर्यालोच्य, एवमुपर्युपरि शतशः परिकल्पनेपि नातिशय इयत्ता प्राप्येत । अतो त्रैव निवृत्तिर्वरमिति पश्यन्ती निववृतइत्येतस्यार्थस्य यतोवाचइत्यादिना वर्णने नदोषलेशं पश्यामः । लोकेच स्वाभीष्टफलप्राप्तये क्रमेण तदुपायपरम्परायां प्रवृत्तस्य पुरुषस्याशक्त्यादिना- वशिष्टपर्वविशेषाप्रवृत्त्या कस्मिंश्चिदुपायपर्वणि स्थितस्य, अयमप्राप्यैव मध्ये निवृत्तइति व्यवहारो दृश्यते । यथा देवदत्तो महाभाष्यपठनपर्यन्तं प्रवृत्तोऽप्राप्यैव तं मनोरथं मध्ये निवृत्त इत्यादि । अतो 'यत्तु तेयेशत-

मित्यादिवचस्तत्प्रवृत्तमेवेति न तस्य कदापि निवृत्ति'रिति त्वदीयदुर्वचनस्य सद्भिर्दूरपरिहरणीयतया यतोवाचइत्यादेर्यथोक्त एवार्थः ।

भवतुतावदिदम् । त्वत्पक्षे वा घटस्सन्निति व्यवहारविशेषस्य कथं श्रौतबाधे सति निवृत्ति ? प्रवृत्तव्यक्तेर्निवृत्त्यभावेपि आसंसारमनुवर्तमानस्य तत्सजातीयस्य निवृत्त्या न दोष इतिचेत् । हन्त तर्हि ममापि, ब्रह्मणो निष्प्रपञ्चत्वाज्ञानदशायां तवेव, ब्रह्मानन्दातिशयेयत्ताशून्यत्वाज्ञानदशायांजातसजातीयव्यवहारस्तदज्ञाने निवर्ततइति तुल्यम् । मम घटस्सन्निति लौकिकव्यवहार आसंसारं प्रवर्ततइति तस्य निवृत्तिर्युक्ता । तवतु तादृशव्यवहारान्तरसत्त्वे किंमानमितिचेत् कस्यचिद्ब्रह्मानन्दतत्त्वं जिज्ञासमानस्य, केनचित्प्रमाणाभासेन तेयेशतमितिवाक्यस्य शतगुणितप्राजापत्यानन्दमत्वपरतां भ्राम्यतः कस्यचिद्वचनेन, आनन्दत्वादेव ब्रह्मानन्दोपि सातिशय इत्यनुमानेन वा ब्रह्मानन्दपरिच्छिन्नत्वभ्रमव्यवहारसंभवे बाधकाभावात्तन्निवृत्तेस्तत्त्वज्ञाने सतिसंभवात्त्वत्पक्षादस्य वैषम्याभावात् । तर्हि मत्पक्षः कथन्न परिगृह्यतामितिचेन्न । तस्योक्तवक्ष्यमाणबहुदोषग्रस्तत्वात् ।

यत्पुनर्वाचइत्यस्यासंकोचसंभवे संकोचो न न्याय्य इति, तत्राप्युच्यते। यत आनन्दाद्वाचो मनसासह निवर्तन्ते तमानन्दं विद्वानित्युक्ते वाचइत्यस्य परिच्छिन्नत्ववाग्विषयकत्वं विद्वानित्यस्यापरिच्छिन्नत्वेन वेदनपरत्वंच न्यायनिरपेक्षं वाक्यार्थाबाधाय स्वरसतएव सिद्ध्यतीत्येतादृशस्थले संकोचस्य दोषत्वाभावात् । नहि "वचसामपि गोचरो न यस्स तमानन्दमविन्दत द्विज"इत्युक्तौ संकोचं दोषत्वेनाभिमन्यन्ते काव्यज्ञाः । किञ्च तवापि संकोच आवश्यकः, 'असन्घटः, ब्रह्मणि प्रपञ्चोध्यस्तः, ब्रह्मभिन्नंमिथ्या, निर्विशेषं ब्रह्म, अद्वैतमेव तत्त्वमित्यादीनां वाक्पदेनाग्रहणात् । सन्घटस्सन्पट

इत्यादीनमेवेदंरजतमित्यादितुल्यत्वेन त्वदभिमतानां ग्रहणोक्तेः। वस्तुतोऽप्राप्येत्यस्याखण्डाकारमप्राप्येत्यर्थो नसंभवति, वाचामखण्डाकारप्राप्त्यपेक्षया प्रवृत्तेरेवादर्शनादित्यवोचामेति नघटपटादिवाग्ग्रहणमपि संभवति। स्यादेतत्— अखण्डाकारमप्राप्येत्यर्थस्यासंभवेपि यथावस्थितस्वरूपमप्राप्येत्यर्थोस्तु। तच्च यथावस्थितस्वरूपं पर्यालोचनेऽखण्डाकारएवेतिचेन्नैतदपि। वाङ्मनसयोर्यथावस्थितस्वरूपप्राप्त्यपेक्षानियमस्याप्यसंभवात्। सन्ति ह्ययथावस्थितरूपबोधनाभिसन्धिनैव प्रवर्तमानानि परश्शतान्यनृतवादिनां वचांसि। मनश्च भ्रमप्रमासाधारण्येन सकलज्ञानसमानकारणं न यथावस्थितस्वरूपप्राप्तय एव प्रवर्तते। अतो यथावस्थितस्वरूपमित्यध्याहारेप्यनृतवागादेर्यथावस्थितस्वरूपप्राप्तये प्रवृत्त्यभावाद्वागादिपदं तद्विषयकत्वाभावात्संकुचितवृत्तिकमेव। एवं यथावस्थितरूपमप्राप्य ब्रह्मतो निवर्तन्तइत्युक्तौ ब्रह्मणोऽयथावस्थितत्वमपि सिद्ध्येत्। एवं लोकयात्रानिर्वाहार्थं प्रयुज्यमानानां सर्वेषामपि वचसां लोके यादृशार्थप्रापणाय प्रवृत्तिर्नततो निवृत्तिः। यादृशब्रह्मविषयकत्वं च तेषान्नास्ति, न तादृशविषये तेषां कदापि प्रवृत्तिरिति तादृशयथावस्थितस्वरूपविषये तेषां प्रवृत्तिरपि दुरुपपादा, प्रवृत्तिप्रसक्त्यभावादेव निवृत्तिरप्यशक्यवर्णनेति नघटपटादिलौकिकव्यवहाराणांवाक्पदेन ग्रहणसंभवः। अतस्तत्त्वमसि, सत्यंज्ञानमित्यादीनामेव वाक्पदेन ग्रहणं कर्तव्यम्, तेषामेव तत्र प्रवृत्तत्वात्। तथाच तासांततोनिवृत्तिर्दुर्वचा। यदिपुनस्ता यथावस्थितस्वरूपमप्राप्य ब्रह्मतो निवर्तन्ते, तर्हि केनापि प्रमाणेन ब्रह्मणो दुस्साधत्वाच्छून्यवादएव स्यादिति महद्वैसम्। अथ सगुणब्रह्मप्रतिपादिका वाच एव वाक्पदेन गृह्यन्त इतिचेत् तर्हि तावन्मात्रग्रहणेपि संकुचितवृत्तिकत्वं तस्यापरिहृतमेवेति।

वस्तुतस्तद्ग्रहणमपि नसंभवति । तासामखण्डाकारपर्यन्ते प्रवृत्तेरेवाभावात् । नचाखण्डाकारेविशिप्य प्रवृत्त्यभावेपि यथावस्थितस्वरूपविषये प्रवृत्तिरस्त्येवेति वाच्यम्, तर्हि तादृशसगुणवाक्यप्रतिपाद्यानां सकलजगत्कारणत्वसर्वज्ञत्वादीनां यथावस्थितत्वेन तत्प्रतिपादिकानां वाचां तदप्राप्तिनिवृत्त्युक्त्यसंभवात् । नहि प्रमणभूतपरस्सहस्रवाक्यावगतानां तेषामयथावस्थितत्वम् । प्रमाणान्तरबलादयथावस्थितत्वमवगम्यत इतिचेत् किं नेतिनेतीत्यादिवाक्यबलात्, आहोस्विद्यतोवाचइति प्रकृतवाक्यबलादेव? नाद्यः प्रकृतैतावत्त्वंहीत्यादिना तदन्यार्थकताया वक्ष्यमाणत्वात् । नान्त्यः विविधभेदविस्पष्टबोधकोपक्रमगतबहुतरवाक्याप्रामाण्यस्य जघन्यप्रकृतवाक्यशकलबलेन कल्पयितुमशक्यत्वात्; तादृशाशेषवाक्यानुगुणार्थपरतयैव सूपपन्नत्वेन विरोधप्रसक्तेरेवाभावेन पूर्ववाक्याप्रामाण्यकल्पनाऽयोगाच्च । कथमानुगुण्यमितिचेदित्थम्—महता प्रपञ्चेन सकलजगत्कारणत्वान्तरात्मत्वादिसकलकल्याणगुणविभूषितं ब्रह्म प्रतिपाद्य श्रुतिरुक्तमेवार्थं द्रढयति यतइति । अयमर्थः, येपुनरुक्तप्रकारेन प्रमाणतःप्रतिपत्तव्यं ब्रह्म बृहत्त्वबृंहणत्वविशिष्टं सप्रपञ्चं वस्त्वनवबुध्यमानाः युक्त्याभासैश्शब्दाभासैश्च कुत्सितां बुद्धिमवष्टभ्याद्वैतादिकमेव तत्त्वं प्रतिपन्नाः, तेषामयथावस्थितार्थपरा वाचोऽविशुद्धेन मनसा सहाप्राप्यैव यतः पूर्वोक्ताद्ब्रह्मणो निवर्तन्ते, तस्य ब्रह्मण आनन्दं विद्वान्नबिभेतीति । तथाचोक्तार्थपरत्वेनानन्दापरिच्छेद्यत्वपरत्वेन वा पूर्वसकलवाक्याविरोधेनैवैतदर्थवर्णनसंभवेन नैतद्बलेन बहुतरवाक्याप्रामाण्यशङ्कावकाशलेशोपीति ।

अपिच यतोवाचइत्यादेः पूर्वं ब्रह्मण्यारोपितप्रपञ्चापवादपरत्वे आनन्दमयमात्मानमुपसंक्रामतीत्युक्त्वा तदप्येषश्लोको भवतीति, वक्ष्यमाणस्य

यतोवाच इति श्लोकस्योक्तार्थविषयकत्वोक्तिस्सर्वथा न संगच्छते । नहि सप्रपञ्चता यतइत्यादिना विध्रियते, अपितु पूर्वमध्यस्तस्यापवादः क्रियते प्रपञ्चो नेति । इत्थञ्च पूर्वोक्तमनुसृत्य तद्विस्तारस्तत्प्रशंसाऽन्यद्वा किंचित्तदुपयुक्तं यत्र प्रस्तूयते तत्रैव. तद्विषये वक्ष्यमाणश्लोको भवतीति पूर्वोक्तस्य निषेधस्थले तदुक्तिरयुक्तेति । अतएव तदप्येष—इत्युक्त्वा पठितानां श्लोकानां साक्षित्वव्यवहारः, उक्तार्थानुमोदकत्वात् । अस्मत्पक्षेत्वभयं प्रतिष्ठां विन्दते । अथ सोऽभयंगतोभवतीतिव्यवहितपूर्वोक्तस्य, सयएवंविदित्यारभ्य एतमानन्दमयमात्मानमुपसंक्रामतीत्यन्तेनाव्यवहितोक्तस्य वोपासनपूर्वकब्रह्मप्राप्तिरूपार्थस्य यतोवाचइतिप्रपञ्चनं क्रियतइति तदप्येषइति सुसंगतम् । प्रतिष्ठांविन्दते, सय एवंविदित्युक्तमुपासनं परिच्छेदविषयकवाङ्मनसागोचरानन्दविशिष्टब्रह्मविषयकम् ; अभयं गतो भवति, आनन्दमय—मुपसंक्रामतीत्युक्तंच भयहेतूनां सकलपुण्यपापरूपकर्मणां निरवशेषसुन्मूलिततया सकलसांसारिकभयात्यन्तनिवृत्तिपूर्वपरब्रह्मप्राप्तिरूपमिति विवृतमिति । एवंच पूर्वं प्रपञ्चमिथ्यात्वस्य वा ब्रह्मणो निर्विशेषत्वस्य वाऽनाघ्रातत्वेन प्रत्युत ब्रह्मणि सप्रपञ्चत्वस्यैवोक्तत्वेनच त्वदुक्तार्थत्वे तदप्येषइत्याद्यसंगतमेव स्यात् ।

एतेन 'यतोवाचइत्यस्य ब्रह्मणि प्रवृत्ते वाङ्मनसे सर्वप्रवृत्तिनिमित्तमृषात्वादेव तदेवाप्राप्य निवर्तेते इत्येवार्थः । ब्रह्मानन्दमभिदधाना एव वाचस्तदियत्तामप्राप्य निवर्तन्तइत्यर्थेऽध्याहारप्रसंगात् । प्रवृत्तिनिवृत्त्योरेकनिरूप्यत्वस्वारस्यं परित्यज्य भिन्ननिरूप्यत्वकल्पनाप्रसंगाच्चे'ति **सिद्धान्तसिद्धाञ्जनोक्तं** निरस्तम् । विशेषमृषात्वस्य प्रकरणानाघ्रातत्वेनानुपस्थिततयाऽकाण्डे तस्य वाङ्मनसनिवृत्तिहेतुत्वोक्तेरुपहास्यत्वात् । उपवर्णितार्थ-

स्यासामञ्जस्याच्च । अत्र यतइत्येतद्ब्रह्मपरमानन्दपरं वा भवितुमर्हति, आनन्दं ब्रह्मण इति तयोरभिधानात् । तत्र ब्रह्मपरत्वे, ब्रह्मणः प्रवृत्तिनिमित्तधर्माभावात्तन्मृषात्वाद्वा वाङ्मनसागोचरत्वस्येप्यमाणत्वे, पूर्वार्धे यतइत्यत्र, उत्तरार्धे ब्रह्मणइत्यत्र, तथा श्रुत्यादौ सहस्रशः प्रयुज्यमानेषु ब्रह्मबोधकपदेषु चासाधुत्व—लक्षणादौर्घल्याद्यसामञ्जस्यप्रसंगेन परिच्छिन्नत्वेन वागादिविषयत्वाभावस्य विवक्षणीयत्वे सिद्धे, स्वरूपतः परिच्छेदाभावस्य कालादिसाधारणतयाऽन्तत आनन्दादिगुणद्वारा तदभावस्य तत्र विवक्षाऽऽवश्यिकीति प्रथमत एव यतइत्यस्यानन्दपरत्वमङ्गीकृत्यार्थवर्णनमुचिततरम् । आनन्दं ब्रह्मण इत्युपसर्जनतया निर्दिष्टब्रह्मापेक्षया प्रधानतया निर्दिष्टस्यानन्दस्य यतइत्यादिनोत्कर्षवर्णनस्य युक्तत्वाच्च । अपरिच्छिन्नत्वरूपप्राचुर्योपक्रमानुसाराच्च । इत्थंच यतआनन्दाद्वाचो निवर्तन्ते तमानन्दमित्यर्थएव स्वरसप्रतीतिको ग्राह्यो, नतु त्वदुक्तः । तत्रहि 'तदेवाप्राप्ये'त्यत्र तदा ब्रह्मग्रहणे वाक्यार्थासामञ्जस्यम् । ग्राममप्राप्य ग्रामान्निवर्तत इत्यव्यवहारात्, ग्रामं गतस्तत्रेप्सितमप्राप्य तस्मान्निवर्तत इत्येव व्यवहारात् । नहि तस्याप्राप्तत्वे निवर्तनीयत्वपर्यवसायिनिवृत्त्यपादानत्वसंभवः, प्राप्तस्यैव निवर्तनीयत्वात् ग्राममप्राप्य निवर्तत इति व्यवहारसत्त्वे मार्गमध्यादित्यध्याहार एव । एवं तदा निमित्तग्रहणेऽपि वाक्यार्थासामञ्जस्यमेव । ब्रह्मणि निमित्तालाभे वाचां प्रवृत्तेरसंभवेन तत्र तासां प्रवृत्त्युक्त्यैव तल्लाभस्यावर्जनीयतायां निमित्तमप्राप्येत्युक्तेरनन्वयप्रसंगात् । किंच विषयप्राप्त्यतिरिक्तप्रवृत्त्यसंभवं मन्वानेन कथं ब्रह्मण्येव प्रवृत्ते वाङ्मनसे ततएवनिवर्तेते इति व्याख्यायते ? अभिधानापरपर्यायविषयप्राप्तिरूपप्रवृत्तिमत्त्वेऽभिधानस्य निर्वृत्ततयाऽनभिधानरूपानिवृत्त्यसंभवात्, परस्परव्याघातात् । नचांशभेदेनोभयोपपत्तिः, ब्रह्मणो

निरंशत्वात् । प्रवृत्तिनिवृत्त्योर्भिन्ननिरूप्यत्वप्रसंगाच्च । नच वाच्यं ब्रह्मणि प्रवृत्ते इत्यादेर्मृषाविशेषविशिष्टे प्रवृत्तिश्शुद्धान्निवृत्तिरात्याशय इति । प्रवृत्त्यधिकरणस्य निवृत्त्यपादानताया वक्तव्यतया तयोर्वैयधिकरण्ये वाक्यार्थासामञ्जस्यात् शुद्धे विशेषाभावेन विशेषमृषात्वादिति हेतूक्तेरसांगत्यात् । एवं व्याख्यानस्य ब्रह्मणः केनचित्प्रमाणेन निर्विशेषत्वरूपशुद्धत्वं सिद्धवत्कृत्यैव प्रवृत्तेर्वक्तव्यतया वाक्यस्यास्य तन्निर्विशेषत्वे प्रमाणत्वायोगाच्च । विशिष्टशुद्धयोरभेदान्नासामञ्जस्यमित्यपि मन्दम्, तथासति तत्र प्रवृत्तस्य ततो निवृत्तेरयोगात् ।

ननु ब्रह्मण्येव प्रवृत्ते इत्यस्य ब्रह्म वक्तुं स्मर्तुंच प्रवृत्ते इत्यर्थ इतिचेन्न, एवमप्यसंभवात् अशाब्दत्वाच्च । तस्माद्ब्रह्मणि प्रवृत्ता वाचो ब्रह्म निमित्तंवाऽप्राप्य ब्रह्मणो निवर्तन्ते, प्रवृत्तिनिमित्तमृषात्वादित्यर्थवर्णनमसमञ्जसमेवेति ।

यदुक्तमस्मत्पक्षेऽध्याहारसंग इति, तत्किमियत्तापदाध्याहाराभिप्रायेण ? उत प्रवृत्तपदाध्याहाराभिप्रायेण । नाद्यः, तवाप्यप्राप्येत्ये तदाकांक्षितकर्मसमर्पकतया यत्किंचित्पदाध्याहारस्यावश्यकत्वात् । नान्त्यः, तस्मान्निवृत्त्युक्त्यैव तत्र प्रवृत्तेरर्थसिद्धतयाध्याहारानपेक्षणात् । अन्यथा तवापि तत्प्रसंगात् । यदुक्तं प्रवृत्तिनिवृत्त्योर्भिन्ननिरूपितत्वमस्वरसमिति ; तन्न, तयोरेकनिरूप्यत्वस्यैवाभ्युपगमात् । देवदत्तान्वेषणाय ग्रामे प्रवृत्तो यज्ञदत्तस्तत्र तमलब्ध्वातस्मान्निवृत्त इतिवत् ब्रह्मानन्दावधिलाभायानन्दे प्रवृत्तावाक् तमलब्ध्वातस्मान्निवर्तत- इत्यर्थाभ्युपगमे तयोरेकनिरूप्यत्वानपायात् । परंत्वत्रार्थसामञ्जस्यात् वस्तुसामर्थ्यादर्थान्तरासंभवाच्च वाचामानन्दान्निवृत्ति स्सैषेत्यादिनारब्धायाआनन्दमीमांसाया निवृत्तिरिति ।

तस्माद्भेदव्यपदेशादितिसूत्रे न्यायरक्षामण्युक्तमानन्दवल्लीप्रकरणस्योपक्रमोपसंहारादिना निर्विशेषब्रह्मपरत्वमसंभवग्रस्तमिति स्थितम् । तस्मादानन्दमयस्य ब्रह्मत्वे दोषगन्धाभावात्तत्रैवपक्षे सूत्राणां स्वारस्यस्य सहृदयहृदयसाक्षिकं प्रतीतेश्चानन्दमयोब्रह्मेतिपक्षएव सूत्रानुसारिभिः प्रमाणशरणैरास्थेय इति सिद्धम् ।

यत्तूक्तं **न्यायरक्षामणौ** प्रकरणानुरोधेनानन्दमयब्रह्मणोरभेदवर्णनमयुक्तम् । ऋक्सामादीनां मनोभिन्नत्वेनान्नमयेपि शिरःप्रभृतीनां देहस्य-चावयवावयविभावभेदसत्त्वेन प्रकरणस्य स्वस्मादनतिरिक्तैश्शिरःपक्षादिमत्त्वरूपणपरत्वासिद्धेः । तस्मात्तस्य पुच्छंब्रह्मेति स्वरसतः प्रतीयमानभेदत्यागोन युक्त इति । तन्न । उपक्रमेऽन्नमयपर्याये स्वस्मादनतिरिक्तस्वावयवानामेव पक्षादित्वरूपणदर्शनेन पर्यायान्तरेष्वपि तथैवाभ्युपगन्तुं युक्तत्वात् । एतदुक्तं भवति—प्रथमे पर्याये तावत् पुरुषशब्दितदेहावयवभूतपाणिपादस्य पक्षत्वपुच्छत्वरूपणं स्पष्टं प्रतीयते शिरोमध्यकायविषयेपीदमेव शिरः इत्युक्त्यानात्र शिरस्त्वशून्यस्य तत्कल्पनम्, अपितु वस्तुतश्शिरस एव पाण्यादेः पक्षत्वाद्यनुसंधानवेलायां पक्षिशिरस्त्वेनानुसंधेयत्वमुच्यतइति प्रतीयते । तथाच देहावयवत्वेन देहानतिरिक्तानामेव तेनतेन रूपेणानुसंधेयत्वमुक्तमिति सिद्धम् । अवयवावयविनोश्च न घटपटयोरिवात्यन्तंभेदः नापि घटकलशयोरिवात्यन्तमभेदः नापि नैयायिकसंमतस्समवेतसमवायिभावरूपसंबन्धार्हो भेदः सूत्रकृतैव तस्य निरस्तत्वात् अपित्ववयविन्यवयवसमुदायरूपे समुदायिनामवयवानामन्तर्गतत्वलक्षणस्संबन्धएवाभ्युपेयते । सचायं धर्मधर्मिणोरप्यविशिष्टः । धर्मिणिधर्मस्यांशत्वेनान्तर्गतत्वात् । अयमेव लोकेप्रतीतिव्यवहारसिद्धोऽनतिरेक इह स्वस्मादनतिरिक्तैस्स्वावयवैरित्यत्र विवक्षितः । एवं

स्वानतिरिक्तावयवविशिष्टमन्नमयंशरीरंप्रतिपाद्योपरि प्राणमयादिषु प्रतिपर्यायं "तस्य पुरुषविधताम्। अन्वयं पुरुषविध" इत्युपक्रमेवचना त्तेष्वप्यन्नमय इव देहाकारत्वंविवक्षितमिति निश्चितम्। तत्रतत्रच कांश्चिदर्थान् गृहीत्वा तेषु शिरस्त्वादिकं च कल्पितमस्ति। एवञ्च यथा देहस्यशिरःप्रभृत्यवयववत्त्वम्। तथा प्राणमयादेस्तत्तत्पदार्थवत्त्वमित्यर्थस्स्वरसतः प्रतीयते। नहि प्राणमयाद्य-संबन्धिषु प्राणमयादिरूपदेहावयवशिरःप्रभृतित्वकल्पना संभवति। अतोसंबद्ध-स्यरूपणासंभवात्संबन्धआवश्यके देहस्य शिरआदिना योऽनतिरेक स्तादृशएव वक्तुमुचितः. तथासत्येव रूपणौचित्यात्। तस्मादनतिरिक्तावयवकान्नमयो-पक्रमबलात् प्रतिपर्यायमन्वयंपुरुषविधइतिनिर्देशात् शिरःप्रभृतिकल्पनाबलाच्च तत्रतत्रनिर्दिष्टाःपदार्थाः प्राणमयाद्यनतिरिक्ता एव स्वीकार्या इतिसिध्यति। तत्रच प्राणमयपर्याये प्राणव्यानापानानां तत्तद्वृत्तिरूपाणां तत्तद्वृत्त्यवच्छिन्न-प्राणरूपाणां वा वृत्तिपञ्चकविशिष्टप्राणनवृत्तिप्रचुरप्राणमयपदवाच्यधर्मत्वेन तदेकदेशत्वेनवाऽनतिरेको निराबाधः। शिष्टयोः पृथिव्याकाशयोरपि संबन्धा-भावे रूपितत्वासंभवात्कश्चित्संबन्धोङ्गीकार्य इति शरीरान्तस्संचारिणोपि प्राणस्य सर्वभूतावच्छिन्नतयाऽऽकाशावच्छिन्नप्राणस्यात्मत्वं पृथिव्यवच्छिन्नस्य च तस्य पुच्छत्वं कल्प्य इति नानुपपत्तिः। एवञ्चातिरिक्ततयाप्रतीयमानस्या-प्यवयवत्वेनकल्पितस्य यादृशस्संबन्धः प्रामाणिक स्तादृशसंबन्धपर्यन्तस्य तत्पदार्थत्वविवक्षणे ऽ नतिरेकोपेक्षितस्सिध्यतीति, तृतीयपर्यायेपि वृत्ति-चतुष्टयविशिष्टमननवृत्तिप्रचुरमनोमयपदवाच्यस्य यजुरादीनाञ्च सुवच एवा-नतिरेकः। तथैव च वर्णितमस्मत्पूर्वाचार्यैः। "यजुरादीपदानि तत्तत्प्रति-पाद्यार्थविषयकज्ञानजनकमनोव्यापारपराणी"ति। अत्र वाङ्मनसात्मकस्य मिथुनस्य श्रुतौ बहुलं निर्देशात् वाचां मनोधर्मत्वंमनसिकृत्यांशत्वेनेहनि

देशः । अतएव श्लोकेपि वाच इति वाग्ग्रहणमित्याहुः । मनोमयशब्दोमनस्सहितवागिन्द्रियपरः । अतीन्द्रियार्थज्ञापकवाग्घेतुत्वाच्चेन्द्रियेषु तस्य प्राधान्यम् । ऋगादयश्च तदंशाः । सर्वेवेदा यत्पदमामनन्तीतिरीत्या कार्त्स्न्येन ब्रह्मप्रतिपादने प्रवृत्ता अपि ऋगादयो यत्प्रकर्षेणपूर्णतयानाप्त्वा ईषद्विभववर्णनेनैव श्रान्ताभवन्ति तस्यब्रह्मण आनन्दं विद्वान्नबिभेतीति श्लोकेपि वाक्प्रस्तावोस्त्येवेत्यपि केचित् । चतुर्थेपिश्रद्धाऋतसत्ययोगानां ज्ञानविशेषवाचिनां विज्ञानमयशब्दवाच्यजीवधर्मत्वादनतिरेकसिद्धिः । महःपदमपि सामर्थ्यविशेषपरं व्याख्यायते । तस्य तद्वाचकत्वसंभवात् । इत्थञ्च चतुर्ष्वपिपर्यायेष्वन्नमयादिभ्योनतिरिक्तानामेव शिरस्त्वादिरूपणमुक्तयुक्त्याऽभ्युपेयमिति पञ्चमेपि पर्याये प्रधानानन्दमयसंबद्धानां तदनतिरिक्तानामेव शिरस्त्वादिना रूपणमित्यवश्यमङ्गीकार्यम् । संभवतिचात्र तेषामनतिरेकः प्रसिद्धः । तथाहि अत्रानन्दमय इति मयट् प्राचुर्यार्थे इति हेतूपन्यासपूर्वकमवोचाम । ततश्च ब्रह्मणोबहुविधसुखविशेषसंभवेन तत्तत्सुखविशेषरूपधर्म एव शिरस्त्वादिना रूप्यते । प्रियादिसुखविशेषाश्रयभूतमतएवानन्दमयपदवाच्यं [धर्म्यंशभूतं] ब्रह्मैवाधारत्वेन पुच्छमिति रूप्यते । तत्रचानन्दमयत्वविशिष्टवेषेणावयवित्वं स्वरूपतोनिरतिशयबृहत्त्वेनपुच्छत्व मिति विवेकः । उपनिषद्भाष्यकाराभिमतेयंयोजना । अन्यापि योजना श्रीभाष्यारूढा । आनन्दरूपं ब्रह्मैव बुद्ध्या प्रियत्वादिना विभज्य शिरस्त्वादिना व्यपदिश्यते । एवञ्चसति प्रियमोदादीनां निरवयवानन्दरूपब्रह्मावयत्वं बुद्ध्या परिकल्प्य तेषांच शिरस्त्वादिना तदेकदेशत्वोक्तौ शिरआद्यपेक्षयादेहस्येव प्रियाद्यपेक्षयाब्रह्मणो तिमहत्त्वप्रतीता वनवच्छिन्नानन्दरूपत्वं सिद्ध्यतीति । योजनाद्वयेप्यानन्दमयात्प्रियादीनामनतिरेकस्समानः, पूर्वत्र धर्मधर्मिभावनिबन्धनः, उत्तरत्र-

काल्पनिकावयवावयविभावनिबन्धन इति । नच ब्रह्मस्वरूपस्यैव प्रियाद्यंश-भेदकल्पने तस्यप्रियमेवेत्यादिसंदर्भस्यानन्दमयपदबोध्यानन्दप्राचुर्योपपादनार्थत्वं न संभवतीति वाच्यम् । एकस्मिन्पक्षे प्रचुरो य आनन्द स्तस्यापि तत्पदबोध्यतया तस्य तदर्थत्वोपपत्तेः । स्वरूपस्य प्रियाद्यनेकांशसमुदाय-रूपत्वकल्पन आनन्दात्मकस्य तस्य प्रचुरत्वसिद्धेः । वस्तुतस्तु प्रियादिगुण-विशिष्टस्वरूपस्य शिरस्त्वादिकल्पना स्वीक्रियत इति, श्रीभाष्ये 'प्रियमोद-प्रमोदानन्दानाम्' 'ब्रह्मैवप्रियमोदादिरूपेण' इत्युभयत्रापि प्रियादिशब्दा-स्तदवच्छिन्नब्रह्मपरा इत्यङ्गीकारे योजनैक्यमेवेति बोद्धव्यम् । पक्षेस्मिन्निरवय-वस्यब्रह्मणस्सांशत्वकल्पनं नास्तीति लाघवमपीत्यलम् । तस्मात्पर्यायपञ्चकेपि शिरस्त्वादिना रूपणं स्वस्मादनतिरिक्तानामेवेतिन वैषम्यलेशः । यत्तूक्तं तस्येतिषष्ठ्या स्वरमतो भेदः प्रतीयत इति तत्सत्यम् । नहि तावता ऽस्मदभिमतविरोधः । पूर्वपर्यायोक्तपुरुषविधत्वमनुसृत्या नन्दमयोपिपुरुषविध इत्युक्तौ, तह्यस्यशिरआदिकंकिमित्यपेक्षायां तस्यशिरःप्रियमेवेत्येवंरीत्या समाधानवचने षष्ठ्यर्थावयवत्वस्य शिरःपदार्थ एवान्वयस्याऽऽवश्यकतया तस्यानन्दमयब्रह्मणोभेदबोधकत्वासंभवात् । तस्यब्रह्मेत्यन्वयासामञ्जस्यात् पुच्छशब्दस्य साकांक्षार्थकत्वेन तत्रैव तदन्वयस्य युक्तत्वाच्च । यद्यपि तस्यब्रह्मेत्यन्वयस्स्यात् तथापिनदोषः । घटात्पटस्येवानन्दमयाद्ब्रह्मणोत्यन्त-भेदाभावेप्यनतिरेकसहिष्णोरंशांशिभावनिबन्धनभेदस्याङ्गीकारेणा नन्दमयाव-यवभूतंब्रह्मेतिबोधस्या स्मदभिमतत्वादिति द्रष्टव्यम् । अवयवित्वावयवत्वयो-र्विरोधेन कथमेकस्मिन्ब्रह्मणि तत्संभव इति त्ववशिष्यते । तच्च परिहृत माकारभेदादविरोध इति । दृश्यते हि लोकेप्येकस्यैवदेवदत्तस्य गुरुपुत्रत्वेन पूज्यत्वं शिष्यत्वेन नियम्यत्वञ्च । तस्मान्न कोपि विरोधः ।

यदप्युक्तं तत्रैव, आनन्दमयस्य ब्रह्मत्वे अन्नमयप्राणमय— शुद्ध्यन्तामिति तस्य शोद्ध्यत्वकथनमसंगतम् नित्यशुद्धस्य शोद्ध्यत्वासंभवादित्याक्षेपस्य केनचिदुपायेनप्रसाद्यत्वरूपं शोद्ध्यत्वं ब्रह्मण्यपिसंभवतीतिसमाधानं न संगच्छते । एवंसत्यशुद्धस्यैवशुद्धेस्संपादनीयतया ब्रह्मणः पूर्वमप्रसाद्यत्वरूपमशुद्धत्वमस्तीत्यास्थेयम् । तच्च न संभवति; अप्रसादस्याशुद्धिशब्दवाच्यत्वायोगात् तथाकुत्राप्यदर्शनात्, नित्यशुद्धत्वश्रुतीनां संकोचप्रसंगाच्चेति । तन्मन्दम् । अप्रसादस्याशुद्धिपदेन बोधने वाधकाभावात् । भवन्मते हि ब्रह्मणश्शुद्धत्वंनिर्विशेषत्वम् । तत्प्रतिकोटिभूतमशुद्धत्वं च विशेषवत्त्वम् । ततश्च सामान्यतोविशेषसंबन्धस्यैवाशुद्धिपदवाच्यत्वाभ्युपगमे कः प्रद्वेषोऽप्रसादात्मकनिग्रहापरपर्यायक्रोधसंबन्धस्य तत्पदवाच्यत्वे ? किञ्च मनसा तु विशुद्धेनेत्यत्र मनसश्शुद्धत्वं कामक्रोधादिरहितत्वमित्यशुद्धत्वं कामक्रोधवत्त्वमेवेत्येष्टव्यम् । तदेवोच्यतेऽस्माभिरपिब्रह्मणोजीवापराधजन्याप्रसादनिग्रहाद्यपरपर्यायक्रोधवत्त्वमशुद्धत्वं, उपायेनप्रसादनीयत्वं शोद्ध्यत्वमिति । चित्तशुद्ध्यर्थानि कर्माणीति वदता त्वयापि मनसोऽशुद्धिरुक्तरूपेत्यभ्युपगतमेव । लोकेपि सापराधेभृत्येराजा न शुद्धहृदय इति व्यवह्रियते । इत्थञ्चतस्यतस्यवस्तुनोऽशुद्धत्वंतत्तदधिकारिणंप्रत्यनिष्टं यत्तत्संबन्धइत्यभ्युपगमेसर्वानुगमोपि : प्रसादविरोधिरूपाप्रसादस्य कालुष्यरूपतया तस्य भक्तंप्रत्यनिष्टत्वेन प्रकृतोपपत्तेः । शुद्धत्वश्रुतीनां संकोचस्त्वधिकारिविशेषविषये भगवतोनिग्रहबोधकप्रमाणाधीन इति स न दोषाय ।

यत्तूक्तं तत्रैव, भूमविद्याप्रकरणे प्रश्नप्रतिवचनाभ्यामर्थान्तरप्रतिपादनशैल्याः प्राणएव समाप्तेऽपि तुशब्दश्रुतिप्राणोत्पत्तिलिङ्गाभ्यां सत्यस्य प्राणादर्थान्तरत्वपरत्वं, एषतुवेत्यादेर्यथाभ्युपगम्यते ; तथेहापि तस्माद्वाएत-

14

स्मादिर्निर्देशः। आनन्दमयएवसमापनेपि पूर्वोक्तप्रमाणैर्ब्रह्मणस्तस्मादप्यर्थान्तर-त्वपरत्वं ब्रह्मपुच्छमित्यस्याभ्युपगन्तुं युक्तम्, वैषम्याभावादिति। तदयुक्तम्, वैषम्यसत्त्वात्। तत्रहि पूर्वमनुक्तस्यातिरिक्तदित्वस्य प्राणविषय उक्त्या प्राणएव प्रक्रान्तआत्मेतिमन्वानस्यशिष्यस्य तूष्णीम्भावे तदभिप्रायवेदिनआचार्यस्य-स्वयमेतस्मादप्यर्थान्तरभूतसत्योपक्षेप इति प्रक्रान्तशैलीभङ्गः प्रसक्तो युक्तः। अत्रत्वात्मनआकाश इत्याकाशकारणस्य वस्तुनो यदुक्तमात्मत्वं, सर्वान्तरत्वेन तदुपपादनाय प्रवृत्तायामस्माद्वाएतस्मादन्नरसमयादित्यादिरीतेः प्रकरणे सर्वान्तरत्वेनात्मत्वं यस्य प्रतिपिपादयिषितं तत्रैव समापनीयतया, विना-प्रबलकारण मन्यत्रवस्तुनि तत्समापनमयुक्तमिति। अत आनन्दमयएव तत्समापनदर्शनेन तस्यैव सर्वान्तरत्वेनात्मत्वंप्रतिपिपादयिषितमित्यङ्गीकार्यम्। नन्वत्रापि प्रस्तुतरीतित्याशस्यकारणएव। ब्रह्मपुच्छंप्रतिष्ठेत्यनेन तस्य पुच्छवदाधारत्वमुच्यते। ततश्च पर्यायान्तरेष्वनुक्तस्य ब्रह्मणआधारत्वस्या त्रोक्त्या तस्यैवानन्दमयान्तसर्वान्तरत्वं तन्निबन्धनमात्मत्वं च सिद्ध्यतीति वैयर्थ्यादेव पर्यायान्तरानारम्भोपपत्ते रितिचेन्न; पूर्वपर्यायेषु पुच्छत्वेन-निर्दिष्टानामिवात्रापितथानिर्दिष्टस्य पुच्छवन्तंप्रत्यप्राधान्यप्रतीत्या न स्वप्रधानं-ब्रह्मपरत्वं ब्रह्मशब्दस्य युक्तम किन्तु स्थलान्तरइव तस्य प्रकृतिपरत्वसंभवात् प्रकृतिपरिणामभूतस्य शरीरस्यानन्दमयंजीवंप्रत्यप्रधानस्यैव सतः पक्षिणं प्रति पुच्छस्येवाऽऽधारत्व मत्रोच्यते। पुच्छत्वनिर्देशेन प्रतीयमानाप्राधान्यापरि-त्यागेनवार्थवर्णनस्ययुक्तत्वात्। तस्य तं प्रति तत्त्वं च तद्विशिष्टस्यैव तस्य फलसाधनभूतलौकिकवैदिकसर्वकर्मकर्तृत्वात्, शरीरेवर्ततेजीव इति व्यपदेशा-च्चोपपद्यते। अतो नेदं पुच्छं ब्रह्मविदाप्नोतीतिप्रक्रान्तब्रह्मे त्यादिविमर्शोन्मेषे विवक्षितासिद्धि रिति पर्यायान्तरस्यावश्यारम्भणीयत्वात्। किञ्चात्रब्रह्मणः

पुच्छप्रतिष्ठाशब्दाभ्यामानन्दमयंप्रत्याधारत्वविवक्षणेऽपि न तंप्रत्यन्तरत्वात्मत्वे सिद्ध्यतः, आधारत्वस्य तद्रूपत्वाभावात् तद्व्याप्यत्वाभावाच्च । य आत्मनि-तिष्ठन्नित्यादिश्रुतौ जीवादीनां परमात्मनिरूपिताधारत्वश्रवणेऽपि तन्निरूपिता-न्तरत्वात्मत्वयोरभावात् । अतश्च पुच्छंप्रतिष्ठेत्यस्य पूर्वोक्तात्मत्वविवरण-रूपत्वासंभवेनानन्दमयादप्यन्तरस्य कस्यचिदात्मनोविवक्षायां पर्यायान्तरमे-वारम्भणीयम्, गत्यन्तराभावात् । एतेन यद्यत्र सर्वान्तरत्वेनात्मत्वविवरणं तथोपदिष्ट आनन्दमयएव पर्यवस्यतीत्युच्यते, तदा भूमविद्याप्रकरणेऽपि तरतिशोकमात्मविदिति प्रक्रान्त आत्मोपदेशः, अथातआत्मादेश इत्युपरिभाग एव पर्यवस्यतु । एषतुवाअतिवदतीति च प्राणशेषं भवतु । यदि तत्र तुशब्दश्रुत्या सत्यपदमर्थान्तरपरमिष्यते, तदाऽत्रापि प्रमाणानुसारेण ब्रह्म-पदमानन्दमयस्याप्यन्तरात्मपरमस्त्वि त्यादिशुष्ककथा निरस्ता वेदितव्या; पर्यायान्तरारम्भंविना विवक्षितलाभायोगस्य सुष्टूपपादितत्वात् । अपिचात्रा नन्दमयोजीवः, पुच्छंब्रह्मतदात्मभूतःपरमात्मे त्यत्र न प्रमाण मनन्यथासिद्ध मुपन्यस्तम्? येनोक्तप्रमाणैरुक्तप्रमाणैरिति शश्वदुद्घुष्यते । यत्तूक्तं 'सयश्चायं-पुरुष' इति ब्रह्मणो जीवान्तरत्वमुच्यत इति, तन्न । तस्य वाक्यस्य त्वत्कूटस्थैरन्यैश्चत्वदीयैरन्यथाव्याख्यातत्वात् । "यो गुहायांनिहितः परमे-व्योम्न्याकाशादिकार्यंसृष्ट्वान्नमयान्तंतदेवानुप्रविष्ट स्स यइति निर्दिश्यते । कोसावयंपुरुषे यश्चासावादित्ये यःपरमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टो यस्यैकदेशंब्रह्मादीनिभूतानिसुखार्हाण्युपजीवन्ति स यश्चासावादित्य इति निर्दिश्यते, स एको भिन्नप्रदेशस्थघटाकाशैकत्ववत्" इति हि त्वत्कूटस्थोक्तिः। "य एव चिद्धातुर्निरतिशयानन्द उत्कृष्टोपाधौ प्रतिबिंबित स्स एव निकृष्टोपाधौ शिरःपाण्यादिमति पुरुषे प्रतिबिंबित इति परमानन्दमपेक्ष्य

समन्वं विशिष्टयोस्स्वभावैक्यं विवक्षितमित्यर्थः" इति च तत्प्रकरणटीका। नह्यत्र ब्रह्मणो जीवान्तरत्वगन्ध आघ्रातोपि। ततश्चाविद्यकं वा भेद मादाय न तस्य जीवान्तरत्वं तत्रोक्तमिति न तदनुरोधेनार्थवर्णनसंभवः। किंच तत्र ब्रह्मणोजीवान्तरत्वकथनेपि न त्वदभिमतसिद्धिः, अस्मद्रीत्यापि तदुपपत्तेः, नहि तत्राऽऽनन्दमयस्य पुच्छंब्रह्मात्मभूतमिति विविच्योक्तम्। यत्तूक्तं पर्यायान्तरारम्भे प्रायपाठात्तस्यासुख्यत्वशङ्कास्यादिति: तत्तुच्छम्। बहुप्रमाणानुरोधेनमुख्यत्वावगमे प्रायपाठस्याकिञ्चित्करत्वात्। अन्यथान्न-मयादिसाहचर्यादानन्दमयस्याप्यचेतनत्वशङ्का स्यादिति तत्पाठस्यापि परित्याग-प्रसंगः। तस्मादानन्दमयस्याब्रह्मत्वसाधकतयाभिमतानां युक्तीनामाभासत्वा त्प्रत्युत तस्य ब्रह्मत्वसाधकसद्युक्तिसद्भावाच्च स एव ब्रह्मेति, स एव बृहत्त्वरूपाकारान्तरेणबुद्ध्यावारोहार्थमवयवविशेषत्वेनापिकल्प्यत इति, आनन्द-मयसंबन्धिनोयस्यकस्यचित्पुच्छत्वेनकल्पन संभवेपि ब्रह्मणस्तत्त्वेनकल्पनं ब्रह्मविदाप्नोतोतिप्रक्रान्तस्यानन्दमयपर्यायेसमापन मितिज्ञापनायेति च सिद्धम्।

एतावतैव प्रबन्धेन. "ब्रह्मपुच्छंप्रतिष्ठेति ब्रह्मशब्दात्प्रतीयते। विशुद्धंब्रह्म. विकृतंत्वानन्दमयशब्दतः।—प्रायपाठपरित्यागो मुख्यत्रितय-लङ्घनम्। पूर्वस्मिन्नुत्तरेपक्षे प्रायपाठस्यबाधनम्" इत्यादिभामतीग्रन्थस्य दत्तोत्तरत्वेपि ग्रन्थकारगौरवानिबन्धनमन्दमतिव्यामोहशमनाय विशेषतोपि तं प्रत्युत्तरयामः। यदुक्तं ब्रह्मपुच्छमित्यत्र शुद्धब्रह्मप्रतीतिः, 'अन्योन्तर-आत्मानन्दमय' इत्यत्र विकृतप्रतीति रिति। तन्न: मयटःप्राचुर्यार्थकताया-स्समर्थिततया विकारार्थकत्वासंभवेनानन्दभरितत्वलक्षणतत्प्रचुरत्वस्यैवबोधना द्विकृतत्वगन्धाप्रसक्तेः। ब्रह्मपुच्छमित्यत्रपुच्छरूपावयवत्वाविवक्षणे पुच्छ-पदस्य सर्वात्मना वैयर्थ्यापत्त्या, कल्पितपुच्छरूपावयवत्वविशिष्टस्यैव

बोधनाद्भवदभिमतविशुद्धब्रह्मप्रतीतेश्च । किञ्च पुच्छपदस्याधारलक्षकत्वेप्यानन्दमयनिरूपिताधारत्वस्यापि भवत्पक्षे विकाररूपतया विशुद्धप्रतीतिर्दुरुपपाद ॥ अपिच भवतापि पूर्वमाकाशादिकारणत्वेन प्रस्तुतस्यैव पुच्छब्रह्मत्वमस्यैव सोऽकामयतेत्यादावुत्तरत्र जगद्रूपेणबहुभवनसंकल्परूपकामनाकर्तृपरतच्छब्दपरामृष्टत्वं चाभ्युपगम्यत इति पूर्वोत्तरयोरात्मादिपदानामिव मध्ये ब्रह्मपदस्यापि शुद्धपरत्वं दुस्संपादम् यदप्युक्तं 'ब्रह्मपदं स्वार्थत्यागेनावयवपरं व्याख्यायताम् ? आनन्दमयपदं च ब्रह्मण्यप्रसिद्धं ब्रह्मणि व्याख्यायताम्, उत्तरत्रानन्दपदेनानन्दमयोलक्ष्यता'-मिति : तदपि न ; ब्रह्मपदे स्वार्थत्यागस्य केनाप्यनुक्तत्वात् । निरतिशयबृहत्त्वविशिष्टे ब्रह्मपदार्थे कल्पितावयवत्वस्यैवाङ्गीकारात् । तत्कल्पनस्य च स्वतस्सिद्धस्वप्राधान्याविरोधित्वस्य प्रागेवोपपादितत्वात् । नहि मुखंचन्द्र इत्यत्र मुखपदमपि चन्द्रपरमिष्यते । आनन्दमयपदस्य प्रकरणानुसारेणानन्दप्रचुरब्रह्मपरत्वस्यात्यन्तयुक्ततया ऽप्रसिद्धत्वकथनस्य स्वेच्छामूलकत्वात् । आनन्दपदस्य तद्गुणसारत्वादितिन्यायेन प्रकारान्तरेण च मुख्यवृत्त्या ब्रह्मपरत्वसंभवेन लक्षणाप्रसक्त्यभावाच्च । एतेन 'ब्रह्मपदं स्वार्थेस्तु । पुच्छपदमधिकरणपरतयाव्याक्रियतामित्यादि दत्तोत्तरं ज्ञेयम् । ब्रह्मानन्दमयानन्दपदानां त्रयाणामपि मुख्यार्थलङ्घनाभावाच्च । बालधौ मुख्यस्य पुच्छपदस्यावयवपरत्व आधारपरत्वे च गौणत्वं तुल्य मित्यपि न । आनन्दमयसंबन्धिप्रियमोदादिषु शिरस्त्वपक्षत्वादिकल्पनाया अस्माभिरङ्गीकृततया पुच्छपदस्य पश्चाद्भागत्वात्मकपुच्छत्वविशिष्टपरत्वसंभवेन गौणत्वायोगात् । आधारपरत्व एव तत्सत्त्वात् । एतेन लाङ्गूले मुख्यं पुच्छपदं न करचरणाद्यवयवमात्रे । आनन्दमयस्यचात्मनो न मुख्यलाङ्गूलसंभव इति

कल्पनत्वेनापि प्रत्युक्तम् । पुच्छपदस्य करचरणाद्यवयवपरतायाः केनाप्यनुक्तेः । आत्मनः करचरणाद्यवयवत्वाप्रसिद्ध्या 'नमुख्यलाङ्गलेति-विशिष्योक्तेरसुन्दरत्वाच्च । यत्तूक्तं परिमले पशुपश्चाद्भाग एव पुच्छपदस्य शक्तिः । पश्चाल्लम्बमानत्वसाम्यात्पक्षिपश्चाद्भागे लक्षणेति तन्न । पशुपश्चाद्भाग इव "अथपुच्छोऽस्त्रीपश्चाद्भागेपिवालधौ" विति पश्चाद्भागमात्रेपि कोशस्य सत्त्वेन प्रकृते पुच्छपदस्य पक्षिपश्चाद्भागपरतायाः पश्चाद्भागमात्रपरताया-वाऽभ्युपगमेन लक्षणाऽप्रसक्तेः । प्रयोगस्तु श्रौतत्वेनैवोपात्तः । लम्बमानत्व-साम्यादित्यप्ययुक्तम् पक्षिपुच्छस्यलम्बमानत्वादर्शनात् । अतः पुच्छपदस्य त्वन्मतएव गौणत्वमिति न तत्र साम्योक्तिर्युक्ता । अवयवप्रायपाठो विकारप्रायपाठेन तुल्य इत्यपि न । अस्माभिः प्राणमयादिष्वपि मयटः प्राचुर्यार्थकत्वस्यैवाभ्युपगमात् । अतोऽयमपि दोषस्त्वत्पक्षएव । अपिच भवत्पक्षे बहवोदोषाः प्रकरणबाधादय उक्ता वक्ष्यन्तेचेति निर्दुष्टः पूर्वः पक्ष एवोपादेयः । पुच्छपदस्याधारपरत्व एव प्रतिष्ठेत्येतदप्युपपन्नतरमित्यपि न । तस्य तत्परत्वाभावेपि ब्रह्मणि पुच्छत्वारोपहेतुभूताधारत्वरूपसाधारणधर्मोप-स्थापकतया तत्साफल्योपपत्तेः । प्रत्युत पुच्छपदेनैवाधारत्वलाभेन प्रति-ष्ठापदवैयर्थ्यमेव त्वत्पक्षे । किञ्च शूरोदेवदत्तस्सिंह इत्यत्र सिंहपदस्य शूरपरत्ववत्पुच्छपदस्याधारपरत्वमसमंजसवदुक्तिकम् । ननु न प्रतिष्ठापदस्याधार-परत्वमङ्गीकृत्यैवमुक्तम्, अन्यतरपदवैयर्थ्यात्, किन्तु करणव्युत्पत्त्या प्रतिष्ठितिहेतुपरत्वमङ्गीकृत्येति चेन्न तत्प्रतिष्ठितिहेतुत्वतदाधारत्वयोर्व्याप्य-व्यापकभावाद्यभावेन तस्य तत्परत्वे प्रतिष्ठेत्युपपन्नमित्युक्तेरसंगतत्वप्रसंगात् । यदप्युक्तं ब्रह्मणस्त्वान्तरत्वमानन्दमयादर्थाद्गम्यतइति न श्रुत्योक्तमिति तदप्यनुपपन्नम्, अर्थादित्यस्य प्रतिज्ञात्वसामर्थ्यादिति हि व्याख्या । नच

प्रतिष्ठापदमात्रेणानन्दमयनिरूपिताधारत्वं ब्रह्मणि प्रतीयते । पक्षिणां यथा पुच्छमाधारभूत मेवं पक्षित्वेन रूपितस्यानन्दमयस्य पुच्छत्वेन रूपितं ब्रह्माधारभूतमित्यभ्युपगमेन पुच्छपदस्य पुच्छत्वकल्पनापरत्वमवर्जनीयम् । एवमप्याधारत्वस्यान्तरत्वात्मत्वव्याप्यत्वाभावस्य पूर्वमुक्ततयाभवदभिमता-सिद्धिश्च । पुच्छपदस्याधारपरतायाः प्रतिष्ठापदाधीनत्वस्य भवतैवोक्ततया तत्पदस्य केवलाधारत्वविलक्षणनियन्तृत्वसमानाधिकरणाधारत्वबलपरत्वं च दुर्वचमिति । यत्तूक्तं परिमले प्रतिष्ठात्वमामर्थ्यादित्यस्यानन्दमयप्रतिष्ठिति-हेतुत्वतदाधारत्वसामर्थ्यादित्यर्थः । अतो न प्राणे व्यभिचार इति । नन्न : पृथिवीपुच्छंप्रतिष्ठा, अथर्वाङ्गिरस पुच्छंप्रतिष्ठा मह पुच्छंप्रतिष्ठेति तस्य तस्य तंतं प्रति पुच्छत्वप्रतिष्ठात्वोक्तिमात्रेण न तत्तन्निमित्तात्मत्वान्तरात्मत्वे सिद्ध्यत इति, अत्रापि ताभ्यां मिलिताभ्यामपि तत्सिद्धेर्दुरुपपादत्वात् । अपिचात्र प्रतिष्ठितिर्नामकार्यकरत्वशक्तिरेव ; अन्यस्यदुर्वचत्वात् । एवञ्च यत्र तदाधारत्वेसति तत्प्रतिष्ठितिहेतुत्वं तत्र तन्निरूपितान्तरत्वात्मत्वे इति हि व्याप्तिरभिमता । सा न भवति । नहि नौकाप्रतिष्ठितिहेतोस्तदाधारस्य-समुद्रस्य तन्निरूपितान्तरत्वात्मत्वे अभ्युपगम्येते । नच खलु जीवप्रतिष्ठिति-हेतोस्तदाधारस्यशरीरस्य तन्निरूपितान्तरत्वात्मत्वे । यदपि तत्रैव तस्माद्वा-एतस्मादन्नरसमयादित्यादिप्रकरणं ब्रह्मणो न्यत्रश्रुतात्मत्वगुहानिहितत्व-विवरणार्थ मितिपक्ष एव भूमविद्यासमाधिराश्रयणीयः । यदितु योवेदनिहितं-गुहायामित्यस्येश्वरेणगुहायांजीवरूपेणनिवेशितं जीवाभिन्नं योवेदे त्यर्थ इति, अत्रोक्तस्य जीवगुहानिहितत्वस्य विवरणरूपत्वं प्रकरणस्याभ्युपगम्यते ; तदाऽऽनन्दमये जीव एव तत्पर्यवमानं युक्तमिति नानुपपत्तिरिति । तत्तुच्छम् ; जीवब्रह्मणोरभेदस्य श्रुतिशतबाधितत्वा दिहापि ब्रह्मविदाप्नोति-

परमिति तयोर्भेदस्य स्फुटं प्रतीतेः। नहि ब्रह्मविदित्यस्य जीवाभिन्नत्वेन वेदनमर्थः यदनुसारादुत्तरत्रतथाकल्प्येनापि । सत्यंज्ञानं—योवेदेत्यनयोर्वाक्यभेदेपि वेदेत्यस्य कर्माकांक्षायां ब्रह्मपदस्यैवानुवृत्तेर्युक्ततया द्वितीयवाक्यस्य त्वदभिमतार्थकत्वायोगात्। "योगिनामधिकारस्स्यादेकस्मिन्हृदये-शये" "गुहाहितं गह्वरेष्ठं पुराणम्" इत्यादि हि प्रमाणमुपासकानुग्रहेण परमात्मनोहृदयसन्निधानं दर्शयति । निहितमिति निधानकर्त्रपेक्षायां च प्रमाणानुगुण्येनोपासकस्यनत्त्वाङ्गीकरो युक्त । वस्तुतो निहितमित्यस्य सन्निहितमित्यर्थाङ्गीकारे न कर्त्राकांक्षावकाशः । इत्थञ्च जीवस्यगुहानिहितत्ववर्णनमुपक्रमस्वस्वारस्यादिनिरुद्ध मिति तद्विवरणरूपत्वं प्रकरणस्य न संभवतीति ।

अथ यात्वियंपुच्छब्रह्मपरत्वेनसूत्रयोजना कृता: तत्र वक्ष्यामः। आनन्दमय. आनन्दमयपर्यायाम्नातंपुच्छब्रह्म. स्वप्राधान्येनप्रतिपाद्यम्. अभ्यासात् असन्नेवेतिश्लोकस्थब्रह्मशब्दाभ्यामविषयत्वा दिति हि प्रथमसूत्रार्थाभिमतः । तत्रैवंसूत्रार्थमुपवर्ण्य सूत्रकृतो वास्तववेदान्तार्थविशदीकरणप्रवृत्तत्वाभ्युपगममपेक्ष्य कपिलहिरण्यगर्भबुद्धबृहस्पतिप्रमुखानामिव भगवतोबादरायणस्यापि वेदविरुद्धार्थवक्तृत्वमभ्युपगम्याप्रामाणिकतमत्वमज्ञतमत्वंवापरिकल्प्य तं दूरतः परित्यज्य स्वातन्त्र्येण सूत्राण्यविरचय्य ततएव भवतां स्वाभिमतवेदान्तार्थप्रसाधनं वरमिति भवदीयभाष्यदर्शिनस्सर्वेऽपि मन्येरन्, सुतराञ्च भवादृशकृतकुसृष्टिनिरीक्षण इति निश्चिनुमः। आनन्दमयपदस्य तावत्पर्यन्तलक्षकत्वे किं मानम्? कोवा स्वरसमार्गपरिग्रहे दुरुद्धरो विरोधः? कावा तादृशी प्राचीनप्राज्ञव्याख्या? कथंच तादृशस्य साध्यस्याध्याहारः? अहो! भवतां सूत्रप्रामाण्यसमर्थनव्यसनिता । भवतुनाम, एवंव्याख्यानेन

कोर्थस्साधितोभवति । सूत्रानिरपेक्षमभ्युपगत आनन्दमयस्यात्रह्मत्वे पुच्छ-ब्रह्मणश्च ब्रह्मपदश्रुतिप्रतिष्ठात्वोक्तिभ्यां विवक्षितप्राधान्यादिके प्रतिपन्ने किं सूत्रसाध्यमवशिष्यते । स्वप्रधानं वा भवतु तदप्रधानं वा । कुत्रपक्षे कोवागुणो दोषोवा ? वस्तुतःप्राधान्यस्य प्रमाणतस्सिद्धावप्राधान्यस्यकार्यार्थ-मारोपिततायाः निराबाधं सिद्धेः, वास्तवारोपितयोस्तयोर्विरोधगन्धाभावात्संशय-पूर्वपक्षानुत्थानात्सूत्रवैयर्थ्यम् । नहि लोकेऽनुजीविनस्सखीनसुहृदोबन्धूनधि पतींश्च पश्यतीतिकार्यार्थैवंविधदर्शनोक्तिमात्रेण तत्तत्प्राधान्याप्राधान्ये अपगच्छतः । अतो निष्प्रयोजनत्वाध्याहारलक्षणापूर्वपक्षानुत्थानादिभि रेवंयोजना हेयैव । अपिचात्रहेतुरप्रयोजकः । पुच्छब्रह्मणोप्राधान्येपि वस्तुसत्प्राधान्यमादाय श्लोकस्थब्रह्मशब्दोपपत्तेः । (तदप्येषइत्यस्यच तस्यैष-इतिप्रकृतार्थपरत्वोक्तिसंभवात् ।) अस्मद्रीत्या श्लोकस्थब्रह्मशब्दस्य पुच्छ-वदानन्दमयविषयकत्वेन स्वरूपासिद्धेः । अवयववाचित्वस्य श्लोकेऽभ्युपगमेपि पर्यायान्तर इव तस्यावयविपरतायाः आवश्यकत्वात् अन्नपदाभ्यासेप्यन्नस्येव ब्रह्मणोऽप्राधान्योपपत्तेश्च । यत्तूक्तं **परिमले** असिद्धिशंकायामपि सूत्र-मेवोत्तरम् । आनन्दमयो न निगमनश्लोकप्रतिपाद्यः ब्रह्मशब्दाभ्यासा दित्यावृत्त्यार्थान्तरपरत्वसंभवादिति ; अत्राप्यर्थवर्णनसौन्दर्यं पूर्ववदुन्नेयम् । स्वमत्या कंचन सिद्धान्तं परिकल्प्य तदत्यन्तविरोधं सूत्राणां प्रपश्यद्भि स्तदविरोधसाधनाय प्रवृत्तैस्सिद्धान्तप्रथमप्रवर्तकै स्तदनुसारिभिश्चैवं वृथा बहुप्रकारं खिद्यत इति प्रामाणिकाः परिहसन्ति । अत्रापि ब्रह्मशब्दाभ्यासे सति आनन्दमयस्यश्लोकप्रतिपाद्यत्वे कोविरोधः । नहि पूर्वत्रैकेनपदेनोपात्तस्य परत्रतेनैवपदेनोपादानं कर्तव्य मितिनियमः । तथासति सत्यंज्ञानमित्युपक्रान्तं-ब्रह्म नाकाशादिकारण मात्मशब्दश्रवणात्, अयमात्मा न पुच्छब्रह्म

ब्रह्मशब्दश्रवणादित्यादेरपि प्रसंगात् । नन्वानन्दमयस्य जीवत्वं सिद्धवत्कृत्यैवमुक्त मितिचेन्न, तस्य तत्त्वसिद्धयसंभवस्य सम्यगुपपादितत्वात् । ब्रह्मशब्दस्यानन्दमयेजघन्यवृत्तिकल्पनाऽयोगादित्यपि ततएवनिरस्तम् । महतासंरम्भेण प्रकरणस्यानवधिकातिशयानन्दपरतां, अन्योन्तरआत्माऽऽनन्दमय इत्यत्रानन्दमयपदस्य मुख्यवृत्त्यानवधिकातिशयानन्दाश्रयपरतां, आनन्दंब्रह्मणोविद्वानितिब्रह्मसंबन्ध्यानन्दवेदनस्य सकलभयनिवृत्तिहेतुत्वप्रतिपादनमेतज्जातीयमन्यच्च पर्यालोचयतां सचेतसामानन्दमयपदस्य जीवविलक्षणपरमात्मपरत्वनिर्णयस्यात्यन्तसुलभतया जघन्यवृत्तिगन्धाभावात् । अन्यदपि यदुक्तं नेत्रैव निगमनश्लोकप्रतिपाद्यत्वाभावरूप उक्तभाष्ये निगमनश्लोकस्थसर्वनामद्वयपरामृष्टत्वमपिहेत्वन्तरं विवक्षितमिति, तदतिस्थवीय इति पूर्वमेवोक्तम् ।

'विकारशब्दादवयववाचकपुच्छशब्दाद्ब्रह्मणस्स्वप्रधानत्वंने ति चेन्न, प्राचुर्यात् अवयवप्रायपाठमनुसृत्याप्यवयवशब्दोपपत्तेरवयवार्थाविवक्षणा' दिति द्वितीयसूत्रार्थवर्णनमपिहेयम्; अस्यार्थस्य सूत्राक्षरस्पर्शाभावात् । किञ्च प्राचुर्यादिति कस्मिन्नंशेहेतुः? न ब्रह्मणस्स्वप्रधानत्वे, पुच्छपदप्रायपाठरूपस्य तस्य तद्धेतुत्वासंभवात् । प्रत्युतास्यास्मिन्नपिपर्याये तद्विषये तात्पर्यातिशयगमकत्वेनाप्रधानत्वाविवक्षाहेतुतयानिष्टसाधकत्वात् । अतएवनपुच्छपदार्थाविवक्षायामपि स हेतुः, सूत्रे तद्बोधकपदाभावाच्च । अपिच तदा पुच्छपदप्रायपाठादवयवार्थो न विवक्ष्यते तदविवक्षणाद्ब्रह्मणस्स्वप्रधानत्वं संभवतात्यर्थपर्यवसानेन "इतिचेन्नप्राचुर्यादि"ति सूत्रे प्राचुर्यस्यैव प्रकृताक्षेपपरिहारकत्वप्रतीतिस्वारस्यभङ्गो दुर्वारः । अपिचार्थाविवक्षाहेतुरयंप्रायपाठः कः? किं प्रतिपर्यायं पुच्छशब्दनिर्देशः किंवा तदनुसारिप्रक्तपुच्छपदनिर्देशः?

नाद्यः, तस्य प्रकृतपुच्छशब्दनिर्देशं प्रतिहेतुत्वे प्यर्थाविवक्षायामहेतुत्वात्, नान्त्यः, तदनुसारितादृशनिर्देशस्य तादृशार्थविवक्षायामेव हेतुत्वात् । अतस्मौत्रोहेतुरनन्वित एव । यत्त्वस्यसूत्रस्य परिमलेन्यायरक्षामणौचावृत्त्यार्थवर्णनम्, तदत्यन्तबाधितमिति अनूद्य दूषयितुमपि लज्जामहे । अथापि तदुक्तेर्मन्दमतिव्यामोहैकप्रयोजनकत्वं प्रदर्शयितुं तत्र कञ्चनांशमनूद्य दूषयामः । परिमले पुच्छपदं न ब्रह्मप्राधान्यविरोधि आधारलक्षकत्वादित्युक्त्वा, 'एवंमत्याधारवाचकपदप्रयोग एवयुक्तो न हीनावयववाचिपदप्रयोग इत्याशङ्क्य पूर्वपर्यायसाम्यार्थं पुच्छपदप्रयोगे आधारत्वप्रतीतिरपिलभ्यत इत्याशयेन तत्प्रयोग इति समाधाय यदुक्तं, पूर्वपर्यायसाम्यार्थं पुच्छपदप्रयोगमात्रं नापेक्षितम्, किन्त्ववयविनःपुच्छरूपावयवविशिष्टत्वबोधोपयोगितया पुच्छपदेनावयवप्रतिपादनम्, तस्याधारलक्षकत्वे तु तन्नसंभवतीति शङ्कायांप्राचुर्यादित्येवोत्तरम् । अर्थान्तरलक्षकत्वेन स्वार्थानभिधायकस्यापि शब्दस्य स्वार्थाभिधानफलार्थत्वे उदाहरणप्राचुर्यसद्भावादिति तदर्थः । सन्ति हि तत्र प्रचुराण्युदाहरणानि । तद्यथा "उत्तरं बर्हिषः प्रस्तरं सादयति । प्रजावै बर्हि र्यजमानःप्रस्तरः । यजमानमेवायजमानादुत्तरंकरोति तस्माद्यजमानोऽयजमानादुत्तर" इत्यत्र प्रस्तरसमानाधिकरणयजमानपदस्य यजमानगतगुणमुखेन प्रस्तरपरत्वमुपवर्णितं तत्सिद्धयधिकरणे । अथापि प्रस्तरे मुख्ययजमानत्वबोधनफलभूतवाक्यशेषार्थोपपादनार्थत्वमपि यजमानपदस्य दृश्यते । एवमन्यान्यपि द्रष्टव्यानीति । तन्न ; तत्रहि यजमानः प्रस्तर इत्यादेर्नामधेयपरत्वं वा गुणविधिपरत्वं वा प्रस्तरस्तावकं यजमानपदमित्यर्थवादत्वं वेति संदेहे औदुम्बराधिकरणन्यायेनार्थवादत्वे सिद्धे कथमर्थवादत्वं स्तुत्यदर्शनादितिशंकायां यजमानपदं गौण्यावृत्त्या प्रस्तरपरमित्युपपत्तिरिति

समाधानमभिमधाय सूत्रकारो गौणीवृत्तिनिमित्तभूतं तत्सिद्धिरूपं धर्मं स्थलान्तरीयधर्मपञ्चकेन सह संगृह्णाति "तत्सिद्धिजातिसारूप्यप्रशंसा-भूमलिङ्गसमवायाइतिगुणाश्रयः" इति। तत्सिद्धिः तस्य मुख्यस्य सिद्धिः कार्य, यजमानःप्रस्तरइत्यत्र यजमानपदस्य वृत्त्यन्तरेण प्रस्तरपरत्वे यजमानकार्य करत्वंनिमित्तमित्यर्थः। ततश्च प्रस्तरे यजमानकार्यकरत्वप्रतीत्या स्तुत्युपपत्ति-रित्यर्थवादत्वं युज्यत इति भावः। अत्र 'यजमानपदंयजमानवृत्तियज्ञनिवर्त-कत्वरूपकार्यविशिष्टपरं एवं स्वाभिधेयसदृशवृत्तित्वमेव गौणत्वम्, नत्वारो-पितार्थकत्वं तदि'ति शास्त्रदीपिकाकाणामाशयः। "नाभिदधाति किन्तु स्वार्थसंबन्धेन बोधयति। यजमानशब्दो हि स्वार्थमभिधत्ते। सचाभिहित-स्वसमवेतं स्वकार्यकरत्वं संबन्धाद्बोधयति। तच्च प्रस्तरेप्यस्तीति प्रस्तरबोध"-इति हि तदुक्तिः। मयूखमालिकाकाराणां तु नात्यन्तमध्यारोपपक्षनिरासोऽभि-मतः, यत एते महतासंरम्भेणारोपपक्षस्यैव लोकवेदानुगुण्यमुपवर्ण्यान्ततो-वेदाप्रामाण्यापत्तिरूपमेकंदोषमभिधाय रुद्ररोदनादिस्थल इव सोपि सुपरिहर इत्युक्त्वा "तथापि 'प्रसरं न लभन्ते हि यावत्केचन मर्कटाः। नाभिद्रवन्ति ते तावत्पिशाचावा स्वगोचर' इति न्यायेन वेदे प्रामाण्यविरोधिन आरोपितार्थत्वस्यावकाशो न देय इत्याशयेन तन्निराकरणं कृत"मिति व्याचक्षते। भाट्टदीपिकाकृतश्च, सौन्दर्यस्यतरङ्गिणीत्यादौ रूपकस्थले आरोपस्यापि दर्शनात्, सादृश्यमात्रविवक्षयोपमालङ्कारस्थले तथा प्रयोगा-च्चारोपितार्थकत्वं सदृशार्थकत्वं च गौणत्वमिति पक्षद्वयमङ्गचकार्षुः। एवञ्च सिंहोदेवदत्त इत्यादावारोपस्याभिमनत्वे सिहपदंआरोपितत्वसंबन्धेन सिंहनिष्ठ-सिंहत्वक्रूरत्वादिधर्मवत्परम्, सादृश्यविवक्षायां च स्वात्यन्तसजातीयधर्मवत्त्व-संबन्धेन सिंहनिष्ठक्रूरत्वादिधर्मविशिष्टपरम्। अनुगतकार्यकारणभावप्रकारश्च

तत्रैव दर्शितः "गौणीज्ञानकार्यतावच्छेदकं च निरुक्तोभयविधसंबन्धान्यतर-संबन्धेन स्वशक्यसमवेतधर्मप्रकारकदेवदत्तविशेष्यकशाब्दत्व" मिति । अत्रेदमवधेयम् आरोपपक्षे सिंहत्वादेरारोपितत्वसंबन्धेन देवदत्तादौ वैशिष्ट्यं शाब्दबोधे स्वीकर्तुं न युक्तम्ः स्वप्रकारकारोपविशेष्यत्वसंबन्धेन सिंहत्व-विशिष्टो देवदत्त इति शाब्दबोधाङ्गीकारे, वैरस्यस्य विस्पष्टत्वात्, इदमत्रारोपितमित्येव शाब्दबोधे भानाङ्गीकारे रूपकस्वरूपोच्छित्तिप्रसङ्गात्, अनुभवविरुद्धत्वाच्च । अत्रेदमालङ्कारिकदृष्ट्या विमर्शनीयम् मुखंचन्द्र इत्यादौ यदि सादृश्यविवक्षयाचन्द्रसदृशंमुखमितिबोधो ऽङ्गीक्रियते तदा चन्द्र-सदृशंमुखमित्यत्रवोपमालङ्कारापत्तिः । नचायं कैश्चिदिष्टः । अतस्तद्वारणाय चन्द्रपदात्प्रतीयमानं चन्द्रसादृश्यं भेदघटितं न प्रतीयते, चन्द्रसदृशंमुखमित्यत्र तु तद्घटितमेव । तथाच सादृश्यघटकतया भेदस्यापि प्रतीतावुपमालङ्कारइति नानुपपत्तिरिति वक्तव्यम् । अथ भेदघटितसादृश्यविवक्षया मुखंचन्द्र इति प्रयोगे किंकर्तव्यमितिचेत् वस्तुतोविभिन्नयोरर्थयोर्भेदमपि यदि विवक्षन्ति तर्हि मुखंचन्द्रइति समानाधिकरणमार्या न प्रयुञ्जीरन्नित्येव समाधिरिति । यदिपुनर्भेदघटितमेव सादृश्यं प्रतीयत इति मतम् तदापि मुखंचन्द्र इत्यत्र स्वारस्यानुरोधाच्चन्द्रत्वारोपोपि भवतीत्येव स्वीकर्तव्यम् अन्यथोपमापत्तेः । नचारोपस्यावश्यकत्वे चन्द्राभिन्नंमुखमित्येव बोधस्वीक्रियताम्, मास्तु सादृश्यपरत्व मितिवाच्यम्, सादृश्यतात्पर्याभावे सिंहोघट इति प्रयोगस्या-प्यापत्तेः, तत्राचमत्कारस्योपपत्तेर्दुर्निरूपत्वप्रसंगात् । अथवा चन्द्राभिन्नंमुख-मित्येव शाब्दबोधः सादृश्यज्ञानं तु मानसं पश्चात्तनमिति । एवञ्च भेदाघटितसादृश्यविवक्षया चन्द्रसदृशंमुखमिति, भेदघटितसादृश्यविवक्षा-

यामप्यारोपस्यापि स्वीकारेण चन्द्राभिन्नचन्द्रसदृशंमुखमिति, आरोपमात्रेण चन्द्राभिन्नंमुखमितित्रिधाबोधवर्णनं सिद्धम् । एवमेव सिंहोदत्त इत्यादावपीति ।

अतश्च प्रकृते यजमानः प्रस्तर इत्यत्र किं पूर्वोक्तबोधत्रयगप्यनङ्गीकृत्य भेदघटितसादृश्यमात्रविवक्षया यजमानसदृशःप्रस्तर इति बोधो वर्ण्यते उत तत्रैवान्यतमो बोधः ? नाद्यः, तस्य पूर्वोक्तप्रकारेणानृजुत्वात् । 'विज्ञान-सारथिरस्तु' असौ वै लोकोऽग्निः, योषा वा गौतमाग्निः, आदित्य एव समित्' इत्यादिवैदिकप्रयोगेपि तत्तद्धर्मविशिष्टताया एव स्वरसप्रतीतेः, आरोपितार्थकत्वं गौणत्व मित्यस्यापि भाट्टदीपिकाकृत्संमतत्वेन तं पक्ष मादायैवार्थवादत्वसिद्धान्तस्थापनसंभवेन सादृश्यमात्रविवक्षाधीनप्रयोगस्याव-श्याभ्युपेयत्वाभावाच्च । नचैवं सूत्रे तत्सिद्धयादिकथनं किमर्थ मितिशङ्क्यम्, आरोपस्यापि सादृश्यमूलकत्वस्य प्राग्दर्शितत्वेनारोपसाधनार्थमेव सादृश्य-सद्भावसूत्रणोपपत्तेः । नचारोपाङ्गीकारे वेदस्याप्रामाण्यापत्तिः, रुद्ररोदनादि-विवादसदर्थेनापि स्तुतिसंभवादप्रामाण्यंनापद्यत इति कैश्चिदुक्तत्वात् । एवं ययाकयापि प्रक्रियया॒ऽप्रामाण्यापत्तिपरिहारपर्यालोचनयैव भाट्टदीपिकाकृतस्तां हेतुमकथयन्त "आरोपकपुरुषाभावा"दित्येव हेतुं निर्दिष्टवन्तः । तदपि केवलमाशङ्कावसरे कृतम् ; एवमाशङ्कितृबुद्धिमनुसृत्यान्यादृशगौणत्वसमर्थनेन समाधानवर्णनेपि वस्तुतो योषा वा गौतमाग्निरित्यादावारोपसद्भावात्पुरुषा-भावेप्यारोपः कथञ्चित्समर्थनीय इत्येव तदभिसंधिः । यदि तु नित्यसिद्धं स्वतस्सर्वज्ञं पुरुषविशेषमभ्युपगम्य तस्यारोपकत्वमुच्यते, तदा तादृशदोषा-भावादारोपपक्ष एव सर्वत्र स्वरसाद इति हृदयम् । तस्मादयं भेदघटित-सादृश्यमात्रपरत्वपक्षो न हृदयङ्गमः । अस्तुवा क्वचित् सादृश्यमात्रविवक्षया प्रयोगः, इष्यतामुपमालङ्कारः । अथापि न त्वदिष्टसिद्धिः । गौणार्थबोधकस्यापि

मुख्यार्थबोधनफलार्थत्वं दृश्यत इति खलु त्वयोच्यते । नच मुख्यार्थबोधनस्यैव फलंयजमानपदघटितवाक्यार्थोपपादनमित्यवश्यमङ्गीकार्यम् । यजमानपदोपस्थाप्यस्यायजमानपदोपस्थाप्यादुत्तरत्वं दृष्टं, तदत्राप्युचितमित्येवार्थवादतात्पर्यसंभवात् । नचामुख्ययजमाने उत्तरत्वं सर्वथा बाधितमस्ति । किंच यथोत्तरत्वस्य यजमाननिष्ठस्य, बर्हिरुपरिभावरूपस्य प्रस्तरनिष्ठस्य च तस्य वस्तुतो वैलक्षण्येपि शब्दैक्यमात्रादर्थवादसांगत्यं तथा प्रकृते मुख्यामुख्ययजमानग्रहणेपीति । एवमेकपदोपस्थाप्यत्वमात्रेणार्थवादप्रवृत्तिरुपपादिता । तथा यजमानस्यायजमानादुत्तरत्वाद्यजमानसदृशस्याप्ययजमानसदृशादुत्तरत्वमुचितमिति तात्पर्यस्यापि वर्णनसंभवादपि नेदंवाक्यार्थोपपदनंमुख्यार्थस्यैव फलम् । एवमाक्षेपितत्वसंबन्धेनैवान्वयइति नियमेपिद्रष्टव्यम् । अत्र पुनः पुच्छपदमुख्यार्थस्यैव फलमानन्दमयस्य पक्षिवत् पुच्छरूपावयवविशिष्टताबोधः, नत्वाधाररूपार्थमात्रस्ये ति स्फुटं वैषम्यमिति । अत आद्यपक्षाङ्गीकारेपि नेष्टसिद्धिः । नाप्यन्त्यः; बोधत्रयेपि यजमानपदस्य यजमानत्ववत्तापरत्वस्याक्ष तत्वेन तेनैवयजमानमेवायजमानादित्यादिवाक्यशेषार्थोपपत्तौ न तत्र त्वदभिमतसाधकांशलेशोपि सत्तां लब्धुमर्हतीति । पूर्वस्मिन्पक्षे यजमानपदबोध्यत्वाविशेषरूपहेतुनायजमानसादृश्यरूपहेतुना वा प्रस्तर उत्तरत्वमुपपादनीयमासीत् । अत्रतु यजमान,ववैशिष्ट्यमेव प्रतीयमानमुत्तरत्वोपपादकमिति नेषदपि क्लेशः । अतएव मयूखमालिकायां, आरोपपक्षे प्रजावै बर्हिर्यजमानः प्रस्तर इत्यादिस्स्तुतिराञ्जस्येनोपपद्यत इत्युक्तम् ।

इदमत्रबोध्यम् । सिंहोदेवदत्तइत्यत्र यदि सिंहशब्दशक्यार्थस्याभेदेनारोपोङ्गीक्रियते, तर्हि सिंहशब्दस्य गौणत्वं न स्यात्; पदद्वयमिदं-

समानाधिकरणमिति सामानाधिकरण्यव्यवहारोपि न युज्यते । एकार्थवाचित्वे हि सामानाधिकरण्यम् । अत आरोपपक्षे सिंहशब्दस्समवायादिसंबन्धेन सिंहत्वक्रूरत्वादिविशिष्टत्वेनासिंहदेवदत्तव्यक्तिमुपस्थापयति । तथाच तादृश-संसर्गकतादृशधर्मप्रकारकव्यक्त्यन्तरविशेष्यकारोपात्मकोपस्थितिकरत्वात् सिंह-पदं देवदत्तादौ गौणम् । अत्रैवारोपितत्वसंबन्धेन शक्यार्थनिष्ठगुणवत्ता गौणीवृत्तिरिति वक्तुरपि तात्पर्यमित्यपि कश्चन पक्ष इशक्यवचनः । एतत्पक्षावलम्बनेपि यजमानशब्दस्य सर्वत्र यजमानस्वरूपधर्मवैशिष्ट्याव-गाहिज्ञानजनकत्वात्पूर्ववदेव वाक्यशेषोपपत्तिरिति ।

तथाचैषां पक्षाणामवलम्बने तुल्यनयात्पुच्छपदस्यापि पुच्छत्वारोप-परत्वमेव सिद्ध्येदिति विपरीतमेव तवेति सर्वथेदमुदाहरणंपरिहरणीयमित्य-लमिदानीम् । एवमन्यदपितदुक्तमुदाहरणंविद्वद्भिर्दूषणीयमिति विरम्यते ।

**न्यायरक्षामणौ** च अवयवविवक्षाभावेपि पुच्छपदमात्रप्रायपाठानुग्रहो युज्यत एव । बृहदारण्यके "असौवै लोकोग्निरित्यत्र पर्यायपञ्चके षष्ठपर्यायेचाग्न्यादिशब्दानां साम्पादिकमुख्यविषयकत्वेन भेदसत्त्वेप्यग्न्यादि-शब्दप्रयोगैकरूप्यवदत्रापिपुच्छशब्दमात्रप्रयोगैकरूप्योपपत्तेरित्युक्तम् ; तत्रापि विषमो दृष्टान्तः । तत्र षष्ठपर्याये साम्पादिकाग्निपरत्वस्य बाधात्प्रायपाठ-भङ्गेपीहाऽभङ्गेनैवोपपत्तेरभङ्गस्यावश्यकत्वाच्च तस्यान्याय्यत्वात् । नहि पूर्व-पर्यायेषु पुच्छत्वमकल्पितंवास्तवमुक्तमस्ति, येनैकरूप्यायाकल्पितोवास्तवार्थ इह विवक्षणीयस्स्यात् । किंच तत्र सर्वेष्वपिपर्यायेष्वग्न्यादिशब्दार्थस्तावद-विशिष्टः । तस्य साम्पादिकत्वतदभावौ च समभिव्याहारबलायत्ताविति तत्र शब्दार्थवैषम्याभावादिहवैषम्यकल्पनाच्च नायं दृष्टान्तः । तत्राग्निसमिद्धूमबुद्धे-स्सर्वत्राविच्छेदा दत्राप्यवयवबुद्ध्यविच्छेदावश्यकतया विपरीतसाधकत्वाच्च ।

किंचात्र पुच्छपदस्यावयवविशेषपरत्वाभावे " आध्यानायप्रयोजनाभावा "-दितिसूत्रेणानन्दमयंब्रह्मध्यानरूपवेदनसिद्धये प्रियमोदादिरूपशिरःपक्षपुच्छा-दिमत्त्वेनोपदिश्यत इत्यर्थकेनात्रत्यपुच्छपदस्याप्यवयवपरताया अवगमितत्वेन तद्विरोधो दुर्वारः । नहि दृष्टान्तसद्भावमात्रेण सूत्रकाराशयविरोधोपि श्लाघ्यः । ननु तस्य सूत्रस्य, आध्यानपूर्वकसम्यग्दर्शनसिद्धये " इन्द्रियेभ्यः-पराह्यर्था " इत्यत्र सर्वेभ्यःपरत्वेन पुरुष एव प्रतिपाद्यते नत्वर्थादयस्त-स्ततःपरत्वेन, प्रयोजनाभावात् वाक्यैकवाक्यत्वे संभवति तद्भेदाङ्गीका-रायोगाच्चेत्यर्थकतया, कठवल्लीवाक्यविषयकत्वाभ्युपगमेन प्रकृते तद्विरोधापादनं तदर्थाज्ञानमूलमे वेतिचेन्न ; कृतकरत्वप्रसंगात्सूत्राक्षराननुगुणत्वात्प्रकरणा-पेक्षितार्थप्रहाणप्रसंगाच्च तत्सूत्रस्य त्वदुत्प्रेक्षितार्थकत्वायोगात् । तथाहि " अशब्दमस्पर्श—निचाय्यतंमृत्युमुखात्प्रमुच्यते "इत्यन्तस्य कठवल्लीप्रकरण-स्य परमात्मपरत्वमत्त्रधिकरणानुमानिकाधिकरणाभ्यां. विशेषतश्च " प्रकर-णाच्च " " वदतीतिचेन्नप्राज्ञोहिप्रकरणा "दितिसूत्राभ्यां पूर्वमेव निर्णीतमिति नात्र निर्णेतव्यमवशिष्यते । नचवाच्यं बहूनामर्थादीनां ततस्ततः परत्व-प्रतिपादके इन्द्रियेभ्यइत्यादिवाक्यसमुदायमात्रे विशिष्यार्थादिपरत्वसन्देहापा-करणायाधिकरणारम्भइति ; प्राणमयादीनां तत्तदन्तरत्वप्रतिपादनस्थल इव, मनुष्यगन्धर्वाद्यानन्दानां पूर्वपूर्वानन्दाधिकत्वप्रतिपादनस्थल इवचात्रापि महावाक्यैकवाक्यत्वनिबन्धनस्यविवक्षितलाभस्य निर्बाधत्वेन संदेहानुदयात् । अन्यथा तत्रापितथानिर्णयकृते सूत्रप्रणयनप्रसंगात् । उपस्थिततादृशतैत्तिरीय-वाक्यत्यागेनकठवल्लीवाक्यस्य विषयतया निर्देशस्यानुचितत्वाच्च । अकाण्डे, ' इन्द्रियेभ्यःपरा 'इत्यत्र पुरुषस्य सर्वेभ्यःपरत्वमेव तात्पर्यविषय इतीदृशो-ध्याहारश्च सूत्रेणमात्रयाप्यसूचितो न सुमनोमनो हरेत् । अपिच

प्रियशिरस्त्वादीतिसूत्रेण तेषामब्रह्मगुणत्वादप्राप्तावुच्यमानायां तर्हि ते किमर्थमुपात्ता इतिशङ्का स्वरसवाहिनीति तत्परिहारो न प्रहाणमर्हति । एव"मात्मशब्दाच्चे"तिसूत्रार्थवर्णनमप्यसुन्दरम् । यस्यार्थस्यै"षसर्वेषुभूतेषु-गूढोत्मानप्रकाशत"इति शास्त्रेणैव दुरधिगमत्वमुच्यते. तस्यैवाधिगमोऽपेक्षित इति तत्प्रतिपत्तिशेषतेवेन्द्रियेभ्यइतिसंदर्भस्योचितेति खलु तवमते तदाशयः। तथाचसति 'अप्रकाशशब्दाच्चेत्येवंसूत्रणमेवोचितम् । एवं गूढोत्मेत्यात्म-शब्दादितरस्यानात्मत्वविवक्षावगमा दात्मशब्दितस्यपुरुषस्यैवे न्द्रियेभ्यइत्यत्र तात्पर्यविषयतेत्यर्थवर्णनमपि न संगच्छते। 'आत्मानंरथिनंविद्धिबुद्धेरात्मा-महानपर"इति विज्ञानात्मन्यप्यात्मशब्दश्रवणेन व्यभिचारात् । नच परमार्थतः परमात्मविज्ञानात्मनोर्भेदाभावान्नानुपपत्ति रितिवाच्यम् । तथापि प्रकृते महतः परमव्यक्त मव्यक्तात्पुरुषःपर इति भेदमवलम्ब्यैव संदर्भप्रवृत्ते-रभेदावलम्बनायोगात् । अन्यथाविज्ञानात्मपरमात्मनोर्भेदाभावेनसिषाधयिषित-स्यात्रोपात्तसर्वापेक्षयापुरुषपरत्वस्यासंभवप्रसंगात् । बुद्धेरात्मामहानित्यत्र त्वत्कूटस्थाभिमतद्वितीयोजनायां तु हैरण्यगर्भ्यां बुद्धौ व्यभिचारो बोध्यः, आत्मशब्दप्रतिपाद्यत्वात् । अतएव भामत्यामस्पष्टैवात्मशब्दप्रतिपाद्यतायाः-पुरुषपरत्वहेतुभावं "पुरुषशब्दवाच्यस्यचात्मनस्स्वयंश्रुत्यैवदुरधिगमत्वाव-धारणा"दिति न प्रकाशत इत्यंशस्यैव हेतुत्वमुपन्यस्तम् । अनेन च स्वपक्षेसूत्रोपात्तहेतोरसामञ्जस्यं स्पष्टम् । या पुनः कस्यचिदुक्तिः 'आनन्दा-द्यधिकरणमेवेयदद्दूरमागच्छतीत्यादिः, साापि पूर्वोक्तरीत्या "प्रियशिरस्त्वाद्य-प्राप्तिः—" "आध्यानाये"त्यनयोरैकाधिकरण्यसिद्ध्या दत्तोत्तरा वेदितव्या । तस्मादस्मद्भाष्यनिष्कृष्टार्थकतायाएवसूत्रद्वयस्याभ्युपगन्तव्यत्वेन पुच्छपदस्या-वयवपरत्वानभ्युपगमेआध्यानायेतिसूत्रविरोधापादनं नासामञ्जस्यगन्धमपि सहत इत्यलम् ।

यदपि तृतीयसूत्रार्थवर्णनं, 'मानन्दमयं विकारजातं प्रति इदं सर्व मसृजत यदिदंकिंचेति ब्रह्मणः कारणत्वव्यपदेशाच्च ब्रह्मस्वप्राधान्येननिर्दिष्टम्। नहि स्वविकारभूतमानन्दमयंप्रतिब्रह्मणोवयवत्वमुपपद्यते. विकारावयवस्यापि विकारत्वावश्यम्भावेन सर्वकारणत्वासंभवात् । अतःपुच्छपदस्याऽऽधारलक्षणै-वोचितेति । तदपिन पूर्वोक्तहेतुभिरानन्दमयस्यब्रह्मत्वनिश्चयात् तत्कारणत्वस्य पुच्छब्रह्मण्यसंभवात् सोकामयतेत्यादावानन्दमयपरामर्शस्यैव पूर्वं निष्कम्पं-साधितत्वाच्च अस्मत्पक्षआकारान्तरविशिष्टस्य स्वस्य स्वावयवत्वकल्पनाद-विरोधस्यसमर्थितत्वाच्च । एतेन **न्यायरक्षामणि**गतं सावतरणमेतत्सूत्रार्थवर्णनं व्युदस्तं वेदितव्यम् ; आनन्दमयपदस्य जीवपरतायास्सुदूरनिरस्तत्वेन तदुक्तस्य सर्वस्य गगननर्तनसहोदरत्वात् । किंच नानन्दमयोजीवः किन्तु परमात्मा, तद्धेतुव्यपदेशात् आनन्दमयस्य 'इदंसर्वमसृजतेतिजगद्धेतुत्वव्य-पदेशात् । नन्वदृष्टद्वारा जीवस्यापि तत्संभवात्कथमिदमितिचेन्न ; व्युपसर्गेण कामनापूर्वकसृष्टृत्वात्मकविशिष्टस्य हेतुत्वाभ्युपगमात् । चकारस्तत्प्रकरणश्रुत-जीवासंभाविताकारसमुच्चायक इतिरीत्यापि सूत्रार्थवर्णनसंभवान्नत्वदुत्प्रेक्षितार्थ-कत्वनियमे हेतुं पश्यामः । एवं यथाऽऽनन्दमयस्य जीवत्वं सिद्धवत्कृत्य सानन्दमयसर्वविकारहेतुव्यपदेशात्पुच्छंप्रधानमित्युच्यते तथा पुच्छब्रह्मण एवानन्दमयावयवत्वादिनाऽऽनन्दमयपरमात्मातिरिक्तत्वं सिद्धवत्कृत्य सपुच्छ-ब्रह्मसर्वविकारहेतुव्यपदेशादानन्दमय एव प्रधानभूत इत्येवार्थः कुतो न भविष्यति ? एतेन बहुबाधस्यान्याय्यत्वादित्यपि दत्तोत्तरम् । उक्तरीत्या सर्वसामञ्जस्येनैकबाधस्याप्यभावात् । पुच्छपदस्यापि मुख्यार्थापरित्यागादस्म-त्पक्षएवाधिकोगुणः । यदत्र **परिमले**-ब्रह्मणि पुच्छत्वकल्पने तस्यानन्दमय-मुख्यावयवत्वमेवांगीकार्यम् प्रकरणे मुख्यावयवेष्वेव शिरस्त्वादिकल्पना-

दर्शनात् । आकाशपृथिवीयजुरादिपदानामपि लक्षणया मुख्यावयवपरत्वात् । अत आनन्दमयं प्रति ब्रह्मणो मुख्यविकारत्वापत्त्या कारणत्वश्रुतिर्विरुद्ध्येनेति भावइति । तदत्यन्तामंबद्धम् । आनन्दमयस्य जीवत्वेपि ब्रह्मवन्निरवयवत्वस्य ब्रह्मणस्स्वप्राधान्यस्यच संप्रतिपन्नत्वेन मुख्यावयवत्वबाधादेव यथाकथञ्चिद्-वयवत्वकल्पनायां अवश्यांगीकार्यतया कारणत्वश्रुतेर्निर्बाधत्वात् । वस्तु-विरोधेसाहचर्यस्याकिञ्चित्करत्वात् । नहि मुख्यावयवत्वमिहोच्यते जीवस्य वस्तुना निरवयवत्वादितित्वयैवान्यत्रोक्तत्वाच्च । अतो न पुच्छत्वकल्पना-कारणत्वश्रुतिमुपरोद्धुमलम् । वस्तुतआनन्दमयस्यब्रह्मत्वनिर्णयेऽयमाक्षेपएव नावतरति । किंच स्वयमेव **न्यायरक्षामणौ** 'ननु सर्वकारणत्वादिविशिष्टस्यैव ब्रह्मणो जीवं प्रति काल्पनिकावयवत्वाङ्गीकारे को विरोध' इत्याशङ्क्य 'नहि वयं वस्तुविरोधं ब्रूमः, येनसमाधानं क्रियेते'ति त्वयैव विरोधाभावस्य कण्ठत उक्तत्वेनात्रपुच्छत्वकल्पनायां कारणत्वश्रुत्युपरोधवर्णनं व्याहतम् । तत्रोक्तस्य-शब्दसामर्थ्यस्य किं समाधान मिति चेदुच्यते । आनन्दमयं ब्रह्म, अवयवितया प्राधान्येनैव प्रतिपादयति स पर्यायः । तदेव बृहत्त्वविशिष्टं यत्किञ्चित्प्रयोजनसिद्धये ऽवयवतयाऽप्राधान्येनापीति न शब्दसामर्थ्यविरोधः । जीवंप्रत्यवयवत्वेपि वस्तुविरोधाभावंवदतस्ते स्वंप्रति तत्त्वे कः प्रद्वेषः? तस्माद्ब्रह्मणःकाल्पनिकावयवत्वसत्त्वेपि कारणत्वस्य निराबाधतायास्तवाप्यभि-मतत्वेन सूत्रयोजनेयमसंगतार्थे तिसिद्धम् ।

यत्तूक्तं **भामत्यां** "मान्त्रवर्णिकमेवचगीयते" यत् सत्यंज्ञानमिति-मन्त्रोक्तं ब्रह्म तदेव ब्रह्मपुच्छंप्रतिष्ठेति ब्राह्मणेन स्वप्राधान्येन गीयते । पुच्छपदस्यावयवपरत्वे तु मन्त्रे प्राधान्यं ब्राह्मणेत्वप्राधान्य मिति मन्त्र-ब्राह्मणयोर्विप्रतिपत्तिस्स्यादिति । तन्न पुच्छपदस्यावयवपरत्वेपि वस्तुतः-

प्रधानस्यैव ब्रह्मण आध्यानायावयवत्वकल्पनोपपत्त्या मन्त्रब्राह्मणयोर्ब्रह्म-प्राधान्यानपायात् । अनन्तंब्रह्मयोवेदेत्यन्वयेन शाब्दप्राधान्यस्य मन्त्रेपि सत्त्वाच्च । यदपि न्यायरत्नमणौ. आत्मनआकाशस्संभूत इत्यत्रात्मन-प्राधान्यावगमा दात्मशब्दनिर्दिष्ट आनन्दमय प्रधान मितिशङ्कानिरासार्थं सूत्रे एवकार । मान्त्रवर्णिकस्य ब्रह्मण एव प्राधान्यमनुसरणीयम्, उपक्रमगतत्वात् ननु तदनन्तरश्रुतस्यात्मन इतिभाव इति । तदपि न; आनन्दमयस्य जीवत्वनिश्चयसत्त्वे तद्धेतुव्यपदेशाच्चेतिसूत्रोक्तरीत्यैवात्मन-आकाशइतिकारणत्वेनोक्तात्माभेदस्य तत्र बाधितत्वेन तदभेदप्रयुक्तप्राधान्य-शङ्काया अनवकाशात् : मन्त्रवर्णे ब्रह्म विशोध्य तस्माद्वाएतस्मादात्मन इत्युक्त्या ब्रह्मात्मनोरभेदेनिर्धारिते ऽनन्तरआनन्दमय आत्मशब्दनिर्देशेन तस्य ब्रह्माभेद एव सिद्ध्यतीति. आनन्दमयवाक्येनैव मान्त्रवर्णिकस्य गीयमानताया निराबाधत्वेन पुच्छब्रह्मणि तदवयवत्वेनावगम्यमाने तत्सिद्ध्य-संभवाच्च । ब्रह्मपदस्य मन्त्रवर्णगतत्वेनात्यन्तोपक्रमस्थत्वेपि पुच्छवाक्या-दानन्दमयवाक्यस्य प्राचीनतया तद्वाक्यार्थालोचनदशायामेवापेक्षितेनात्मन-आकाशइतिवाक्येन पूर्वमेवानन्दमयप्राधान्ये सिद्धे उपक्रमस्थेनापि पुच्छ-वाक्यार्थालोचनकालापेक्षितयापश्चात्तनेन मान्त्रवर्णिकेन पदेन. सञ्जात-विरोधितया, पुच्छप्राधान्यनिश्चायनासंभवाच्च ।

यदपि तत्र नेतरोनुपपत्तेरितिसूत्रं पूर्वोत्तरसंदर्भयोर्ब्रह्मप्राधान्येपि. शालावत्यप्रश्ने 'सएषपरोवरीयानुद्गीथ' इतिमध्यवाक्ये उद्गीथप्राधान्यमि-वात्रकल्पितपुच्छभावब्रह्मोपसर्जनकानन्दमयप्राधान्यमस्तु । तथाच पूर्वोत्तर-संदर्भयोरपि तच्छेषत्व मित्याशङ्कापरिहारार्थं, तत्रोपक्रमानुगुण्यात्तथात्वेप्य-त्रोपक्रमोपसंहारावगतब्रह्मप्राधान्यविरोधान्नतथेत्यर्थक मिति तदपि न :

शालावत्यप्रश्ने 'अस्य लोकस्य का गति रिति परम्परया सामगतिभूतेदम्लोक-गतिप्रश्नस्येव कृतत्वेन 'आकाश इति होवाचे'त्युत्तरवाक्यस्य ब्रह्मैव तद्गति रित्यर्थकस्य प्रक्रमानुसारेण परम्परया ब्रह्मगतिकं सामे त्यर्थ एव पर्यवसानस्य स्पष्टत्वेन पूर्वसंदर्भस्य ब्रह्मप्राधान्यपरत्वादर्शनादाशङ्कानुपपत्तेः । इहानन्द-मयोपासनविध्यश्रवणेन शालावत्यप्रश्नन्यायानवताराच्च । फलश्रवणाभावे-नोपासनकल्पनाया अप्यसंभवात् । आनन्दमयवाक्ये फलोपायानुक्तावपि तत्कल्पनस्य 'ब्रह्मविदाप्नोतिपर'मित्यादेर्ब्रह्मप्रधानवाक्यस्यैतद्वाक्यंप्रतिशेष-त्वकल्पनया तत्रश्रुतफलोपायप्रहाणस्य चायुक्तत्वेनेदृशशङ्कोन्मेषासंभवाच्च । पूर्वं त्रिभिस्सूत्रै रुपक्रमोपसंहारावगतब्रह्मप्राधान्यस्यैवानन्दमयाप्राधान्यं प्रति हेतुत्वं प्रदर्शित मिति अनन्यलभ्यार्थपरत्वाभावेन सूत्रवैयर्थ्याच्च ।

यदपि तत्रैव, 'भेदव्यपदेशाच्चे तिसूत्रं, 'पूर्वोत्तरसंदर्भयोस्स्वतन्त्र-त्वेनानन्दमयशेषत्वाभावे प्यानन्दमयवाक्ये ब्रह्मपुच्छंप्रतिष्ठेतीदं शुद्धब्रह्मण-एवोपास्यानन्दमयोपसर्जनत्वपरमस्तु, नह्येकत्रप्रधानस्या न्यत्राप्युपसर्जनत्वा-योग' इत्याशङ्कापरिहारार्थम् । भेदविरोधी अपदेशो भेदव्यपदेशः, भेदप्रपञ्चमिथ्यात्वपर्यवसायी यतोवाचोनिवर्तन्त इत्याद्युपदेशः, तद्विरोधा-त्प्रियाद्यवयवयुक्तस्सविशेषउपास्यआनन्दमयो न प्रतिपाद्यः, निर्विशेषब्रह्मण-स्सविशेषंप्रतिविशेषणत्वायोगात् ; किन्तु निर्विशेषं ज्ञेयं पुच्छब्रह्मैव प्रतिपाद्य मिति तदर्थः । 'तद्व्यपदेशंचे' तिजैमिनीयसूत्रे व्यपदेशशब्दस्याभिमतार्थ-विशेषपरत्वदर्शना दत्रापि भेदविरुद्धप्रतिपादनादित्यर्थपरत्वंसंभवतीति ; तदप्ययुक्तम् ; ब्रह्मपुच्छंप्रतिष्ठे त्यत्रारोपितपुच्छत्वप्रतिष्ठात्वविशिष्टब्रह्मण एव प्रतीत्या शुद्धब्रह्मण उपसर्जनत्वानवगमेन, ज्ञेयस्य शुद्धब्रह्मण उपास्य-विशेषणत्वासंभवेन चेदृशशङ्काया अयोगात् । ब्रह्मणश्शुद्धत्वस्य शङ्कितुरभि-

सतत्त्वेनैव तस्य प्रपञ्चमिथ्यात्वाङ्गीकारावगमेन तंप्रति सूत्रेण तन्मिथ्यात्वपर्यवसायिवाक्यप्रदर्शनस्यानपेक्षितत्वाच्च । नच सविशेषब्रह्मण एवोपसर्जनत्वमाशङ्क्यत इतिवाच्यम्, तथानुक्तेः, तत्परिहारस्य 'कामाच्चे'तिसूत्रकार्यत्वाभ्युपगमाच्च । अर्थवर्णनमप्यसाधु । तद्व्यपदेशंचे त्यत्र तस्य विधेयत्वेनाभिमतस्य गुणस्य श्येनस्य व्यपदेशो विधेयोपमानत्वेन निर्देशो यत्र, 'यथावैश्येनोनिपत्येतिवाक्ये तत् तद्व्यपदेशमित्यर्थवर्णनेन विवक्षितलाभे त्वदुक्तरीतेस्तत्राभावेना त्रैवमर्थवर्णनस्यनिरालम्बनत्वात् । एवमेव हि तत्र तान्त्रिकै स्तद्व्यपदेशशब्दो व्याख्यातः । विपदोपस्थापिते विरोधादिरूपे पदार्थैकदेशे भेदपदार्थान्वयस्य क्लिष्टत्वेन, 'न्यायविरुद्धं भाषते' 'वेदविरुद्धं भाषण' मित्याद्यर्थे न्यायस्य विभाषते, वेदविभाषण मित्यादिप्रयोगाभावेन प्रातिपदिकार्थस्योपसर्गाद्यर्थेन्वयानङ्गीकारेण च तादृशार्थवर्णनायोगाच्च । न्यायसुधायामपि 'तेन विधित्सितेन श्येनादिरूपेण गुणेन भिन्नार्थतया व्यपदेश स्संकीर्तनं यस्य श्येनादिपदस्य तदपि नामधेय'मित्यत्र भाष्यसंगमनार्थेवाक्ये तच्छब्दार्थस्य विशब्दार्थभेदे न्वयो न प्रतीयते । तथासति 'तस्माच्छेनादिरूपाद्गुणाद्भिन्नरूपतयेतिनिर्देशप्रसंगात् । अतो यस्य पदस्य प्रयोगः प्रसिद्धश्येनादिरूपपदार्थप्रयुक्तः परन्तु सादृश्यप्रतियोगितयैवतद्विवक्षणाद्भिन्नार्थकत्वाभिप्रायक स्तत्पदं नामधेयमित्येवंविधार्थकत्वमेव । तद्व्यपदेशशब्दस्य वाक्यशेषपरत्वं स्वरसान्यविधसमासकत्वं चैवान्यैरादृतमिति च ध्येयम् । अपिच तत्र यथा श्येनो निपत्त्य मत्स्यादिकमादत्ते, एवमयमपि विधेय श्शत्रुं निपत्त्यादत्त इत्यर्थस्सुस्पष्ट इति नामधेयतासाधकन्यायान्तरशिक्षणाय तद्वाक्यार्थस्य सूत्रकारेण हेतूकरणं तदनुगुणसूत्रार्थवर्णनं च युक्ततमम् । अत्र तु यतोवाच इत्यादिवाचो निर्विशेषब्रह्मपरत्वं, सुस्पष्ट-

भेदगर्गम्यापि ब्रह्मविदाप्नोतीत्युपक्रमवाक्यस्या र्थान्तरपरत्वं, तदानुगुण्येन तदुत्तरसंदर्भस्य प्रपञ्चारोपपरत्वं. उक्तवाक्यस्यैवमारोपितप्रपञ्चनिषेधपरत्वं च श्रोतुश्श्रोत्रव्यथाजनक मतिक्लेशेनैव त्वयोपवर्णित मिति न तादृशार्थं हेतूकरिष्यति सूत्रकार इति न तथाविधार्थवर्णनं तवोपपन्नम्। संप्रतिपन्नस्य खलु हेतूकरण मुचितम्, न विप्रतिपन्नस्य, नैव गगनकुसुमायमानस्य। यदि सूत्रकृ द्यतोवाच इत्यस्य निर्विशेषपरत्वसाधकं यत्किञ्चित्सूत्रं विरचय्य तदर्थं पुच्छब्रह्मप्राधान्ये हेतूकुर्यात्, तदा सुशोभनं भवेत्। त्वमपि सूत्रकृतोपि सिद्धान्तस्थापने निपुणतरस्सूत्रान्तरइव सूत्रावृत्त्यादिना तद्वाक्यस्य तत्परत्वं निद्राभिमुखमुखो न साधयसि। ततश्चापूर्वसूत्रप्रणयनसापेक्षवाक्य-विशेषार्थस्य हेतुत्वं सूत्रकाराभिमत मितिकथन मसंबद्धमेव। किञ्चैवंसति सूत्रकारः किमिति भेदव्युपदेशात्, भेदविरोधात्, भेदापवादा दित्येवंरूपेण सूत्रं न प्रणिनाय। पूर्वत्रेवात्राप्यर्थान्तरक्रोडीकारार्थ मेवं प्रणयन मिति तु तवापि दुर्वचमासीदित्यलम्।

यदपि तत्रैव कामाच्चेतिसूत्रे, भृगुवल्ल्यां पञ्चमपर्यायाम्नातस्यानन्दस्य प्राधान्यदर्शना त्स्थानसाम्यादानन्दवल्ल्यामपिपञ्चमपर्यायाम्नातस्यानन्दमयस्य प्राधान्य मनुमीयते। उपक्रमोपसंहाराभ्यां प्रकरणस्य पुच्छब्रह्मपरत्वेपि भूमविद्याप्रकरण इव मध्ये ब्रह्मोपसर्जनकान्योपासनविधिसंभवा दित्याशङ्काया-मुच्यते 'कामा—च्चे'ति। कामः आनन्दः। भृगुवल्ल्याम्नातमानन्दमवलम्ब्या-नन्दमयस्यप्राधान्ये प्रत्याशा न कार्या वैषम्यादि तिसूत्रार्थः। वैषम्यंचैतत् भृगुवल्ल्यामानन्दस्यब्रह्मरूपत्वं श्रुत्यैव सिद्धम्, आनन्दवल्ल्यान्त्वानन्द-मयादन्यस्य पुच्छब्रह्मणः प्रतिपादनेन तस्मिन्नेव पूर्वोत्तरसंदर्भसमन्वय इति; भूमविद्याप्रकरण उपास्त इत्युपासनविधिश्रवणादन्योपासनमभ्युपगम्यते,

नैवमत्रविधिश्श्रूयत—इति च । आनन्दादिनिवक्तव्ये कामादितिवचनं पुच्छब्रह्मणः प्रधानत्ववादनिरासार्थम् । सोऽकामयतेने तिश्रुतात्कामादानुमान-प्रधानप्रत्याशा न कार्या साङ्ख्येने तीतिः तदपि कात्स्न्र्येनानुपपन्नम् ; तथाहि अत्र भृगुवल्लीस्थानसाम्यात्प्राधान्याक्षेपः किं तत्रेवात्राप्यानन्दमयस्य ब्रह्मत्वाङ्गीकारेण, किंवा ऽत्रेव तत्रापि जीवपरत्वाभिमानेन, यद्वार्थभेदेपि पञ्चमपर्यायस्थनामात्रेण प्राधान्यौचित्यपर्यालोचनया ? नाद्यः, तथासति नामादिस्थलइवोपासनविधानशङ्कानुत्पत्तेः । न द्वितीयः, तस्य तत्र श्रुत-जगत्कारणत्वादिविरोधेन जीवत्वस्याशङ्कनीयत्वात् । एवं सति यथा तत्र भृगुवल्ल्यां प्रधानप्रतिपाद्यत्वं तथात्रापि कृत्स्नानन्दवल्ल्याप्यानन्दमयस्यैव प्रधानप्रतिपाद्यत्वमित्येवाक्षेपकल्पनाप्रसंगाच्च । नच तथैव तवेष्टम् ; पूर्वोत्तरसंदर्भयोस्स्वातन्त्र्येणशुद्धब्रह्मपरत्वस्योक्तत्वात् । ननु स्थानसाम्यं पर्यायान्तरनिरूपितप्राधान्यमात्रसाधकमिष्यत इतिचेन्न ; तथासत्यत्रोपासना-विध्यभावेपि ब्रह्मशेषत्वे प्यानन्दमयस्यान्नमयादिपर्यायान्तरनिरूपितप्राधान्य-स्याक्षतत्वेन स्थानसाम्यस्योपपन्नतया तस्य कल्पितपुच्छभावब्रह्मविशेषिता-नन्दमयोपासनविधानप्रदर्शनमुखेन तत्प्राधान्यसाधकत्वासंभवात् । अतएव न तृतीयः, पञ्चमपर्यायस्थत्वेप्यर्थभेदस्येवाप्राधान्यादेरपि संभवेन तस्य तदसाध-कत्वाच्च । अत इदमवतरणमनुपपन्नम् । एवं कामशब्दस्यानन्दपरत्व मपेक्षाशब्दस्यप्रत्याशापरत्वं चा त्यन्तास्वरसम् , तयोरिच्छावचनतयाप्रसिद्धेः। अनुमानमित्येतावत एव पर्याप्तत्वेनापेक्षाशब्दवैयर्थ्यं च । नञर्थभूतसाध्य-साधनार्थापेक्षितहेतुपरतयाप्रतीयमानस्य कामादित्यस्य निषेध्यं, प्रति हेतुपरतया व्याख्यानं चास्वरसम् । वैषम्यादिति पदाध्याहारस्यायुक्तता च । अवश्यवक्तव्यं हेतुं परित्यज्य प्रतिज्ञामात्रसूत्रणे सूत्रस्य न्यायनिबन्धनरूपत्वासिद्धिश्च ।

किञ्चानन्दादित्येव सूत्रयितुं युक्तम् । साङ्ख्यनिरासार्थंतथेतिचेन्न, आनन्दादितिनिर्देशेपि तदुपपत्तेः । प्रधानप्रत्याशा न कार्या, पुच्छब्रह्मण- एवोपरिष्टादानन्दपदेननिर्देशात् । अचेतनस्यप्रधानस्यानन्दरूपत्वासंभवादिति। नहिप्रधानाप्रधाननिरसनीयमतद्वयानुगुणशब्दप्रयोगमुपेक्ष्याप्रधानमात्रानुगुण – शब्दनिर्देश स्तस्यक्लिष्टगत्याप्रधानानुगुणार्थकत्वाभिप्रायश्च निपुणतमस्य सूत्रकृत उपपद्यते । उत्तरसूत्रे 'तद्योग'मिति तत्पदेनानन्दपरामर्शस्याभिमत- तयाप्यत्रानन्दपदप्रयोग एव साधीयान् । तत्रापि कामपदेन क्लिष्टगत्यानन्दोप- स्थापनस्यायुक्तत्वात् । किंचैतत्सूत्रावतरणोक्तां निर्विशेषप्रकरणेपि सविशेष स्योपास्यान्तरोपसर्जनत्वमस्त्वित्याशङ्का मेतत्सूत्रं न निवारयतीत्युत्तरसूत्रा- वतरणमेव स्फुटयति । अत इदं व्यर्थम् । नहि पूर्वोत्तरसंदर्भयोर्ब्रह्मप्राधान्य- सद्भावरूपवैषम्यप्रदर्शनार्थमिदम् ; तस्य शङ्कित्रैवाभ्युपगतत्वात् । अन्तत उपक्रमोपसंहारावगतब्रह्मप्राधान्यस्यैवोक्तत्वेन तस्यपूर्वसूत्रसिद्धत्वाच्च । चका- रार्थस्तु प्रागेव परास्तः । किंच भेदव्यपदेशादितिसूत्रत्रये पुनःपुनरेकामेव- ब्रह्मणउपसर्जनत्वसंभवशङ्का मवतरणेष्वनुशयातिशयेननिबध्नता त्वयैव समाधानं दुर्वच मितिस्फुटीक्रियत इव । नकेवलमेतावत् ; कामाच्चेत्यन्तेन सूत्रसप्तके- नापि पुच्छब्रह्मप्राधान्यरूपाभिमतार्थोन संपादित इत्यष्टमसूत्रावतरणमवलोक- यतां स्फुटम् । इदानीमष्टमेनापि तत्संपादनमशक्य मित्युच्यते ।

रसोवै स इत्यत्र रसपदवाच्यनिरतिशयानन्दरूपब्रह्मप्रतिपत्तिशेषत्व- स्येदंपदबोध्येजीवेक्लृप्तत्वा दत्रापितथैवाङ्गीकार्य मिति हि सूत्राभिप्रायो विवृतः । स न संभवति । उपक्रमे शिरःपक्षाद्यवयवविशिष्टत्वेनानन्दमयस्य प्रतीत्या पक्षादीनामिव पुच्छस्याप्यवयविप्रतिपत्तिशेषत्वस्यैव निश्चितत्वेन तदनुरोधेनैवोपसंहारेरसोवैसइत्यादेर्नेयत्वात् । तथाहि ब्रह्मविदाप्नोतीत्युक्तायाः

परप्राप्तेः कथं निरतिशयपुरुषार्थरूपत्वम् ? चतुर्मुखादिप्राप्तिवत्परिमितसुख-रूपत्वं मतान्तरवत्सुखदुःखप्रहाणेनस्वरूपेणावस्थितिरूपत्वं वा कुतो न स्या दितिशंकायां रसो हि सः रसं हि लब्ध्वानन्दीभवती त्युच्यते । प्राप्यस्यानन्दयितुर्निरतिशयानन्दरूपत्वात् तद्वत्त्वाच्च, तत्प्राप्तुरपि तादृशा-नन्दवत्त्वमुपपन्न मितिभावः । इत्थञ्च जीवनिरतिशयानन्दत्वप्रतिपत्तिशेषत्वमेव ब्रह्मणस्तत्रेत्युचितम् । अन्यथा रसोवै, रसं हीतिनिर्देशस्वारस्यहानिश्च । नान्यं कञ्चन जडं परिमितानन्दं वा प्राप्नोति निरतिशयानन्दं हि लभते ऽतएवमानन्दीतितत्तात्पर्यम् । नूनमस्यापिहेतोरित्थमसिद्धिमालोच्यैवान्यो-हेतुश्चकारार्थतयात्वया कल्पितः । एवं कण्ठतस्सूत्रकृदुक्तेषुहेतुषु न कश्चिदपि त्वदभीष्टसाधक इति तवैवहृद्गत मासीदितिस्थिते त्वमेव विभावय कथमस्वर-सार्थकल्पनयाप्यसाधकानि सूत्राणि त्वन्मतस्याबाधकानि भविष्यन्ती ति । संभवत्येकवाक्यत्व इति तु ममाप्यनुकूलम् ? एकवाक्यतया महाप्रकरणस्या-नन्दमयपरतयैव योजनायास्संभवात् । इत्थञ्चाष्टापि सूत्राण्यनर्थकान्येव ते संवृत्तानीति । किंच कामाच्च, अस्मिन्नि तिसूत्रावतरणिकयोः, 'सगुण-ब्रह्मदृष्टिविशेषितनामाद्युपास्यस्य प्रतिपादनदर्शनात्', 'निर्विशेषप्रकरणमध्येपि सविशेषब्रह्मोपसर्जनकान्योपासनाविधाने भूमविद्यान्यायेन संभाविते' इति वदता त्वया,' तद्धेतुव्यपदेशाच्चे 'तिसूत्रेऽन्ततःपरपक्षनिरासवज्रायुधतया यदवलम्बितं शब्दसामर्थ्यं तदपि परित्यक्त मिति सुस्पष्टम् । आशङ्कायास्त-स्याश्शब्दसामर्थ्यमुपमर्द्यैव प्रवृत्तत्वात् । तदादाय सूत्रद्वयेन शंकासमाधानस्या-संपादितत्वाच्चेत्यलं स्वमतिपरिकल्पितसिद्धान्तसंरक्षणश्रद्धामूलाचतुरवादजाल-विशेषपरामर्शेन ।

यत्तूक्तं 'सूत्राणित्वेवंव्याख्येयानी'तिभाष्यभामत्यां, 'वेदसूत्रयोर्विरोधे गुणेत्वन्याय्यकल्पनेति सूत्राण्यन्यथानेतव्यानी'ति ; तदतीवसाहसम ।

तत्तदुपनिषद्वाक्यार्थविषये ऽप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिनिवारणपूर्वकमनन्यथासिद्धप्रमाणान्तरसमीचीनतर्कसाचिव्येन विशदीकरणाय प्रवृत्ते परमर्षिवेदव्यासविहिते सूत्रजाले तुल्यबलेदृशव्याख्यानान्तरविरोधगन्धरहिते आकाशप्राणज्योतिराद्यशेषोत्तराधिकरणेष्विवा नन्दमयंब्रह्मेत्येवंतत्तत्सूत्रस्वरसप्रतिपन्नार्थस्य वाधकल्पनाऽयोगात् । तथाहिसति भङ्ग्यन्तरेण सूत्रकृतो ऽज्ञत्वाप्रामाणिकत्वादिकमेव समर्थितं स्यात् । व्याख्यानतो विशेषप्रतिपत्ति रिति हि न्यायविदः । एतादृशोपनिषद्व्याख्यानात्मकपारमर्षसूत्रव्याख्यानमपि महर्षिकर्तृकं निर्भयं परित्यज्यते । आर्षाणि सूत्रतद्व्याख्यानान्यवलीलयापरित्यजता किमवलम्ब्याभिमतोर्थस्साधयितुंपार्येत । अपिच कस्मिन्नंशे श्रुतिसूत्रयोर्विरोध उपलभ्यते । तयोरत्यन्तानुकूल्यस्यैवास्माभिरुपपादितत्वात् । आर्षव्याख्यानादिभि र्यथाश्रुतार्थस्यैवाऽऽदृततया सूत्राणामन्यथानयनं भगवतो बादरायणस्या नभिमत मित्येव निश्चीयते । "स्मृत्यनवकाशदोषप्रसंग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगा" दितिसूत्रेण च भगवता पाराशर्येण स्वयं बह्वीभिरुपपत्तिभिर्ब्रह्मकारणवादमेवोपनिषदभिप्रेतं समर्थितवतापि कपिलस्मृतिबाधमुद्भाव्य स्मृत्यन्तरविरोधेनैव तस्यादोषत्वमाचक्षाणेनोपदिष्टमेवेदम्, यत् स्वातन्त्र्येणवेदार्थमवधारयितुमशक्नुवतां परतन्त्रप्रज्ञाना मस्माक मत्यल्पया बुद्ध्या सकलवेदतदर्थसाक्षात्कारिपुरुषधौरेयपरिच्छिन्नमर्थमन्यथयितुमसाम्प्रत मिति । गुणेत्वन्याय्यकल्पनेत्यपि न प्रकृतानुगुणम् । श्रुतावन्याय्यकल्पनाप्रसक्तौ किलैतन्न्यायप्रवृत्तिरभिमन्तव्या । यत्त्वध्याहारादिभिर्नेयानीतिकल्पतरुग्रन्थावतरणं **परिमले** 'वेदे यथाकथञ्चिद्योजनेपि पौरुषेयसूत्रविषये स्वायत्ते शब्दप्रयोगे किमर्थं श्रुतिविरोधभ्रमापादकसूत्रप्रणयन मित्याशंक्याध्याहारलक्षणानुषङ्गयोगवृत्तिभिरनेकार्थप्रत्यायनार्थमित्याहेति तन्न । सूत्रकृत एतादृशा-

भिप्रायस्य शपथैकनिर्णेयत्वात् । भ्रमापादकसूत्रैरनेकार्थगर्भीकरणापेक्षया-निस्संशयैकैकार्थकानेकसूत्रप्रणयनस्यैवोचितत्वात् । सूत्राणामसंदिग्धत्वस्यैव चेदावश्यकत्वं, अभ्रामकत्वस्यहिकैमुत्यसिद्ध मिति । किंच स्वरसार्थपरिग्रहे श्रुतिविरोधप्रसंगेनाध्याहारादिक्लेशमभ्युपगम्यापि सूत्राणि नेयानीति भाष्यकृदभिप्रैति । तमेवानुसरतो भामतीकल्पतरुकारौ । त्वंतु ताभ्योपि निपुणतर एवं सूत्रनिर्माणमध्याहारादिनानेकार्थगर्भीकरणायेतिप्रतिजानीष इतिमहदिदं विस्मयपदम् । अपिचैवमिहापीतिकल्पतरुग्रन्थस्य. यथाश्रुतसूत्रनिर्माणस्याध्याहारादिसापेक्षानेकार्थक्रोडीकारार्थत्वतात्पर्यकत्वमसंभवद्वर्णनम् । तथासति 'नेयानीतिपदस्वारस्याभावात्, तथाचाचार्येत्याद्युत्तरवाक्यानन्वयापत्तेश्च । नहि शबरस्वामिना विलक्षणसूत्रनिर्माणस्यानेकार्थगर्भीकरणार्थत्वं तत्र वाक्ये प्रतिज्ञातम् । एवमध्याहारादिनानेकार्थगर्भीकरणस्यसूत्रभूषणत्वे, "सतिसंभवे तदर्थान्येव—नाध्याहारादिभिरेषांपरिकल्पनीयोर्थः" इति न भाषेत । वेदाविरोधस्थलेप्यध्याहारादिनार्थवर्णनेसत्येवसूत्राणां सूत्रत्वमितिहित्वमध्यवस्यसीव । अतस्तथाबुद्धया तादृशसूत्रप्रणयन मित्युक्तमयुक्तमेव । वेदविरोधेऽध्याहारादिभिरर्थःपरिकल्पनायइत्यनुक्त्वा भङ्ग्यन्तरावलम्बिना च शबरस्वामिना यथाशक्तिसूत्राक्लेशनेप्रयतनीयम्, नाकाण्डेऽन्यथाकर्तव्यमित्यावेद्यते । तस्मात्सूत्रकारस्वरसदर्शितहेतूनामाभासतागन्धस्याप्यभावेन स्वरसार्थपरिग्रहे विरोधलेशस्याप्यभावा त्सर्वमिदमात्मनो वेदव्यासाधिकाभिज्ञताभ्रान्तिकृताहङ्कारविजृम्भित मिति ।

एतावताप्रबन्धेना धिकरणान्ते शाङ्करं सूत्रान्यथानयनं तदनुसारीणि व्याख्यानानि तादृशः कश्चन स्वतन्त्रग्रन्थश्च विषयभूतानन्दवल्लीवाक्यप्रामाणान्तरविरुद्धानि युक्त्याभासमूलानि सर्वात्मनासूत्राननुगुणानि सूत्रकारा-

शयविरुद्धानि चेत्यनादरणीयानि प्रामाणिकै रिति स्थापितम्। वृत्तिविरोधस्तु-भूषणमेवस्वग्रन्थस्येति नेषामाशयः, यतइमेतन्निराकरणायैव सङ्घशो यतन्ते। एतदपिकीदृग्गिति मध्यस्था विभावयन्तु। अतःपर मेवमर्थवर्णनं सूत्रान्तर-रूपसूत्रकारवाक्यविरोधादपि तदाशयविरुद्ध मित्युच्यते। तथाहि तृतीयेध्याये तृतीयेपादे 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे' इति सूत्रितमस्ति। तत्र सूत्रमेतके अधिकरणनानात्वैकत्वविचार आस्तां नाम। प्रथमतः कतिपयसूत्रार्थवर्णनं प्रायेण युष्माकमस्माकं च तुल्यम्। तथाहि आनन्दादयः प्रधानस्ये तिसूत्रस्य 'प्रधानस्य ब्रह्मणो धर्मभूता आनन्दादय स्सर्वत्रोप-संहर्तव्या स्सर्वाभेदात् सर्वत्र ब्रह्मणोऽभेदा दिति युष्मदर्थः। अस्माकन्तु, अभेदादिति पर मनुवर्तते। प्रधानस्य ब्रह्मणो गुणिन स्सर्वोपासनेष्वभेदा दानन्दादयस्सर्वत्रोपसंहार्या इत्यर्थः। अत्र प्रधानस्येत्यस्य आनन्दादय इत्यनेनान्वयाङ्गीकारे वैयर्थ्यम्, तेषां ब्रह्मसंबन्धित्वस्य नित्यसिद्धत्वेन तदभावेपिलाभात्। सर्वाभेदा दितिसमस्तानुवृत्तौ सर्वत्र ब्रह्मणोऽभेदा दित्यर्थाङ्गीकारादस्वारस्यं च। अभेदस्य समास्यमानपूर्वपदार्थसंबन्धित्वस्यैव स्वरसत्वात्। एकदेशानुवृत्तिस्तु "केषां शब्दाना" मितिवदुपपन्ना। द्वितीय-स्यापि युष्मत्पक्षे, प्रियशिरस्त्वादीनामन्यत्राप्राप्तिः, प्रियादीनामुपचितत्वानुप-चितत्वनियमात्; उपचयापचयौ च सति भेदे संभवत इत्यर्थः। ब्रह्मणः प्रियादिधर्माङ्गीकारे तेषामुपचयापचयनियमस्यान्यत्रदर्शनेन ब्रह्मगतानामपि तेषां तत्प्रसंगः। यदि ब्रह्म सभेदं भवेत्तदेदमभ्युपगम्येत। तत्तु निर्भेदम्। ततश्च तत्रोपचितापचितप्रियादिभेदप्रसंगेन तेषां ब्रह्मधर्मत्वं न संभवतीति न पूर्वसूत्रन्यायोत्रेति तात्पर्यम्। अस्मत्पक्षेतु प्रियशिरस्त्वादीनामप्राप्तिः, तेषां ब्रह्मगुणत्वाभावात्; कथं तदभावः? भेदे शिरःपक्षपुच्छाद्यवयवभेदेसति

ब्रह्मण उपचयापचयौ प्रसज्येयाताम् । सिद्धं हि शिरःपक्षाद्यवयवतः प्रदेशभेदेन पीनत्वकृशत्वात्मकोपचयापचयवत्त्व मित्यर्थः । अत्र युष्मन्मते निर्भेदे ब्रह्मणि प्रियमोदादिस्वरूपमात्रसंबन्धस्यापिनिर्भेदत्वविरोधित्वेनानिष्ट-तयोपचयापचयरूपशिरआदिगतधर्मपर्यन्तानुधावनं विफलमेव । एवंच प्रियशिरस्त्वाद्यप्राप्ति स्नेहिभेद इत्येव सूत्रयितु मुचितम् । भेदे सति हि प्रियादय उपपद्यन्त इत्यर्थवर्णनसंभवात् । तथा शिरस्त्वेत्यपि व्यर्थम् । एकत्र प्रियशिरस्त्वाङ्गीकारे ऽप्युपचयापचययोरवर्जनीयतया 'नास्त्यन्यत्रप्राप्ति'रिति लेखनमपि न युक्तम् । यथातथावा भवत्वंशान्तरम् । सर्वत्र ब्रह्मणएवो-पास्यत्वात्तद्गुणा आनन्दादयोपि प्राप्नुवन्ति. प्रियशिरस्त्वादि तु न प्राप्नो-तीत्युच्यत इति संप्रतिपन्नम् । एवंच भवद्रीत्या प्रियशिरस्त्वादीनामानन्दमय-पदवाच्यजीवसंबन्धित्वेन प्रधानभूतपुच्छब्रह्मसंबन्धित्वाभावा त्कथं द्वितीय-सूत्रोत्थानम् । ब्रह्मधर्मास्त्वेनान्कृत्वेत्यादिकं तु न मध्यस्थमनोहरम् । यथाश्रुते बाधकाभावेनाकाङ्क्षेसंपूर्णसूत्रत्यागस्या युक्तत्वात् । श्रुतं सर्वं परित्यज्याश्रुतयोर्हेतुसाध्ययोः परिग्रहस्यात्यन्तसाहसत्वात् । संयद्वाम-त्वाद्यप्राप्तिः प्रक्रमभेदेनोपासनाभेदादितिह्यर्थोवर्ण्यते किंचार्थसमानत्वाभावादा-नन्दादिभिन्ना न सर्वत्र प्राप्नुवन्ती तितात्पर्यकेण इतरेत्वर्थसामान्या'दिति-सूत्रेणैव संयद्वामत्वसत्यकामत्वादीनामन्यत्रप्राप्तौनिषिद्धायां सूत्रवैयर्थ्यंदुर्वारम्। नच तत्रार्थसामान्यादित्यस्य प्रतिपाद्यस्य ब्रह्मण एकत्वादित्यर्थ उचितः । तथासति प्रथमसूत्रादर्थवैषम्यलेशाभावादानर्थक्यस्यदुर्वारत्वात् । येतावद्धर्मा-धर्मिस्वरूपप्रतिपत्तिकालेसर्वत्रधर्मिवन्नियमेन प्रतीयन्ते ते सर्वत्रधर्मिणस्सद्भा-वाद्भवन्तियथाघटत्वादयइतिबोधनायार्थसामान्यपदंतत्रप्रयुक्तमिति हि स्वरसतएव प्रतीयते । अतोऽगतिकस्थलीयकत्वाचिन्ताया इहाभ्युपगमोनैव युक्तः ।

विधिर्वाधारणवदित्यत्र तु प्रव्रजेदितिस्पष्टविध्युपलम्भात्, एतेष्वन्यपरेष्व-प्याश्रमप्राप्तिरवश्याङ्गीकार्ये त्यस्मद्भाष्यकारानुगृहीतप्रयोजनविशेषसद्भावाच्च माभ्युपगम्यते। नेवं प्रकृते। किंच कोशधर्मत्वाविशेषात्प्राणशिरस्त्वाद्यप्राप्तिरपि किंमिति न साध्यते। तस्माद्ब्रह्मधर्मान्कृत्वेत्युक्ति रविश्वसनीये ति। इत्थंच प्रियशिरस्त्वादयोब्रह्मसंबन्धित्वेनैवानन्दवल्ल्यामुक्ता इति आनन्दादीनामिव तस्य प्राप्तौ प्रसक्तायां, नानन्दादिवदेते वस्तुतो ब्रह्मगता धर्माः। तथासति ब्रह्मणस्स्थूलत्वकृशत्वादिप्रसंगात्। अपि तु ब्रह्मणः पुरुषविधत्वरूपणानु-गुण्येन तदवयवत्वेन कल्पितप्रियादिषु शिरस्त्वादयोपि कल्पिता इति नैतेषां प्राप्तिप्रसंग इति प्राप्तिनिषेधः कर्तव्य इत्य भिप्रायपद्धति स्सुस्पष्टमवगम्यत इत्यनिच्छता प्यङ्गीकार्य मिति। तस्मादानन्दमयस्या ब्रह्मत्वसाधनं सूत्रकार-स्पष्टोक्तिविरुद्ध मिति सिद्धम्।

अथ पूर्वोपात्तग्रन्थानुक्ता **ब्रह्मविद्याभरणो**क्ताअपि विषया स्सं-ग्रहेणार्थतोनूद्य व्युदस्यन्ते। यदुक्तं तत्र प्रकृताधिकरणान्ते आनन्दमया-दन्यस्यकस्यचिदान्तरस्यात्मनआम्नानाभावा त्तस्यसर्वान्तरत्वसिद्धि रिति न वक्तुं शक्यम्। आनन्दमयपर्यायोत्तरंप्रवृत्तेन 'तस्यैषएवशारीरआत्मेतिवाक्येनैव तस्याप्यात्मान्तरसिद्धेः। ततश्च तस्मिन्नेव सर्वान्तरत्वाकाशादिकारणत्वादिकं पर्यवसाययितुं युक्तम्। अतएव मान्त्रवर्णिकब्रह्मत्वमपि तस्यैव। वस्तुतस्तूपक्रमोक्तंगुहानिहितत्वरूपमान्तरत्वं न ब्राह्मेण रूपेण किन्तु जैवेनेति तस्यानन्दमयेपर्यवसान मानन्दमयस्य जीवत्वमेव साधयेत्। तत्र परमव्योमशब्दस्य भृगुवल्ल्यां सप्रपञ्चं ब्रह्मस्वरूपं निरूप्य 'सैषाभार्गवी-वारुणीविद्या, परमेव्योमन्प्रतिष्ठिते' ति संगमनात्परमेश्वरपरत्वमिति परम-व्योमाश्रितं गुहानिहितं रूपं जैवमेवे त्यास्थेयम्। ततश्चेदमेवजैवंरूप

मानन्दमयपदेनोपस्थाप्यत इति युक्तं प्रतिपत्तुम्. अत्रापि ब्रह्मपुच्छं-प्रतिष्ठेत्युक्त्या ऽऽनन्दमयस्य ब्रह्माश्रितत्वप्रतीत्या तदेवेदमिति प्रत्यभिज्ञानात् । बुद्ध्युपाधिकोजीवो विज्ञानमयः, अज्ञानोपाधिकस्त्वानन्दमय इतिविवक्षोपपत्ते र्विज्ञानमयाज्जीवादन्यत्वेननिर्देशादानन्दमयोब्रह्मे तिसाधनमपि न घटते । "योयंविज्ञानमयःप्राणे" ष्विति विज्ञानमयशब्दस्येव "सुषुप्तस्थान एकीभूतः प्रज्ञानघनएवानन्दमयोह्यानन्दभुगित्यानन्दमयशब्दस्यापि जीवपरत्वदर्शनाच्च । अत्र सुषुप्तलिङ्गा ज्जीवएवानन्दमय इति । यद्वा बुद्धेरप्याधिदैविकविज्ञान-विकारत्वेन विज्ञानमयपदवाच्यत्वसंभवा द्विज्ञानमयशब्दोबुद्धिपर इति नानन्दमयस्यतदन्यत्वोक्तिमात्रेण ब्रह्मत्वप्रत्याशा युक्ता । किंचानन्दमयस्य ब्रह्मत्वाभ्युपगमे ब्रह्मपुच्छमित्युक्तिस्वारस्यसिद्धं तस्याब्रह्मत्वं बाध्येत । तदपेक्ष्य 'ब्रह्मविदाप्नोतीतिप्रकृतप्रत्यभिज्ञाना द्ब्रह्मणस्स्वप्राधान्यसिद्धये पुच्छपदप्रयोगावगतमप्राधान्यमेव बाधितुं युक्तम् । प्रकरणंचेदं 'यतोवाचो-निवर्तन्त' इतिवाक्यवशा न्निर्विशेषपर मित्युक्तार्थएवाभ्युपगन्तव्यः, नानन्दमयप्राधान्यम्, तदुपासनं वा । अत्र वाच इत्यस्य त्वत्पक्षे ब्रह्मानन्दे-यत्ताप्रतिपादकवाग्विषयतया संकोचः प्राप्नोति, नास्मत्पक्षे । सगुणप्रतिपादक-वचनानां शबलितस्वरूपपर्यन्तं प्रवृत्तानां विशुद्धस्वरूपपर्यन्तमप्राप्य निवृत्तिवत् निर्गुणवाक्यार्थगोचरसाक्षात्कारपर्यन्तमौपाधिकगुणजातस्यविद्यमानतया तस्यां-दशायामधिष्ठानमात्रपरिशेषेणविशुद्धस्वरूपाभावा त्तेषामपिवचनानां मुक्ति-दशाभिव्यङ्ग्यं यादृशं विशुद्धं स्वरूपं ततोनिवृत्तिरस्त्येवेति वाचइत्यस्य सगुणनिर्गुणोभयविषयकत्वसंभवात् । एवमियत्तापरिच्छेदिकानां वाचां प्रवृत्ति र्नास्तीति त्वत्पक्षे निवर्तन्तइत्युक्तिस्वारस्यावगता प्रवृत्तिरप्यसंगता । अस्माकंतू क्तरीत्यामुक्तिदशाभिव्यङ्ग्यस्वरूपविलक्षणस्वरूपेप्रवृत्तिसंभवा त्तासां-

गत्यम् । तात्पर्यग्राहकलिङ्गवत्त्वा देकेनाप्यनेन बहुबाधो युज्यत एव । तथाहि वाक्यमिदमस्मिन्प्रकरणेद्विरभ्यस्यते । तथोपक्रमप्रतिज्ञातानन्त्योपपादकतयाप्रवृत्तेन सृष्टिवाक्येन सृष्टितदुपयुक्तगुणमात्रप्रतिपादने वस्तुपरिच्छेदप्रसक्त्याऽऽनन्त्यंनोपपादितंभवती ति सृष्टिवाक्यमिदं स्वापवादमपेक्षत इति तदपवादभूतं तदनुगुणार्थकमेव यतोवाचइतीदं नेयम् । ननूपक्रमे ब्रह्मविदाप्नोतीतिभेदः प्रतीयत इतिचेन्न : तत्राप्नोतेर्भवत्यर्थकत्वात् । ब्रह्मैवभवनातिश्रुत्यन्तरानुगुण्यात । अतः प्रकरणस्योपक्रमोपसंहाराभ्यां निर्विशेषपरत्वाध्यवसाया त्तादृशेपुच्छब्रह्मण्येव स्वप्राधान्यं सर्वान्तरत्वादिकं स्वीकर्तव्यम् । **आनन्दमयोभ्यासात्** । अत्र प्रायपाठानुसारेण पक्षित्वेन निरूपित आनन्दमये 'ब्रह्मपुच्छमितिवाक्यं पश्चाल्लम्बमानावयवदृष्टिविधायकं सदानन्दमयगुणतयैवब्रह्मप्रतिपादयति, उतोपक्रमोपसंहारावगतप्राधान्यकस्य ब्रह्मणो ब्रह्मपदेन प्रत्यभिज्ञाना त्स्वप्रधान्येनैव तत्प्रतिपादयतीति संशयः । ब्रह्मपुच्छमितिवाक्यं प्राधान्येनब्रह्मप्रतिपादकम्, असन्नेवसभवतीतिमन्त्रे भ्यासावगतप्राधान्यकब्रह्मणएवात्रप्रत्यभिज्ञाना दितिसूत्रार्थः । तात्पर्यलिङ्गान्तर्गतस्याभ्यासस्य प्राधान्यसाधन एव स्वारस्यम् । आनन्दमयस्य ब्रह्मत्वसाधनेत्वभ्यासपर्यन्तधावनं व्यर्थम् । जीवानन्दविलक्षणत्वस्यापि ब्रह्मलिङ्गत्वेन तस्यापि क्रोडीकाराय तल्लिङ्गादित्येववक्तव्यत्वात् । प्राधान्यरूपे च साध्य आनन्दमयस्यान्वयो न संभवति । **विकार—प्राचुर्यात्** । अत्रायंसूत्रकाराशयः । अत्र पुच्छपद माधारलक्षकं भविष्यति, न ब्रह्मणआनन्दमयशेषत्वापादकावयवविशेषपरम् । नन्वेवं किमित्याधारवाचकपदमुपेक्ष्य पुच्छपदप्रयोगेणाधारत्वं संपादयति श्रुति रितिचे दुच्यते । पर्यायान्तरेषु पक्षित्वेननिरूपितं तंतमर्थं प्रति कस्यचि त्पुच्छत्वेननिरूपणा दिहाप्या-

नन्दमयस्यपक्षित्वेनानरूपणे पुच्छापेक्षेति तदनुसारेण पर्यायान्तरसाम्यार्थं पुच्छपदं प्रयुज्य तेनाधारतांसंपादयती ति। नन्वेवमर्थभेदःप्राप्नोतीति न साम्यसंभवः; पर्यायान्तरेषु तस्यावयवविशेषपरत्वादत्रचाधारपरत्वा दिति चेन्न । अर्थभेदेसत्यपिशब्दैक्यमात्रेण तदुपपत्तेः । दृश्यतेह्यर्थभेदेऽपि शब्दैक्यमात्रेण प्रायपाठनिर्वहणम् । यथा 'इन्द्रियेभ्यः पराह्यर्था इत्यत्रार्थादीना मिन्द्रियेभ्यःपरत्व मन्यत्, अव्यक्तात्पुरुषःपर इत्यत्र पुरुषस्य परत्वं तत्तद्वाक्यविशेषानुसारादुत्कर्षपर्यवसायितत्तदाकारवत्त्वमन्य दिति वैषम्यसत्त्वेपि परशब्दानुस्यूतिमात्रेण प्रायपाठो निरुह्यते । एवंगार्गिब्राह्मणे ओतप्रोत-शब्दैक्यमात्रेण प्रायपाठनिर्वहणमूह्यम् ।

किंचात्र, नकेवलं प्रायपाठनिर्वाहायैव पुच्छपदप्रयोगः, अपितुशङ्का-विशेषनिवृत्तयेऽपीतिमन्तव्यम् । तथाहि: सत्यंज्ञानमित्युपक्रम आनन्त्यं प्रतिज्ञातम् । वस्त्वन्तरशून्यत्वात्मकवस्तुपरिच्छेदराहित्यरूपमानन्त्यं च वस्त्वन्तरसद्भावे न संभवतीति तत्सद्भावाभ्युपगमे प्रतिज्ञाविरोधः प्राप्नोतीति ब्रह्मव्यतिरिक्तवस्त्वभावोपपादनेन स परिहर्तव्यः । तत्र जडवर्गस्य ब्रह्मविवर्ततया वस्तुपरिच्छेदकत्वं नास्तीत्यंशस्य सृष्टिवाक्यादवगमसंभवेपि जीवस्यतद्विवर्तत्वाभावेन, तेनब्रह्मभिन्नेन ब्रह्मणो वस्तुपरिच्छेदशंका तिष्ठतीति तदपोहाय जीवब्रह्मणोरैक्यमेव वक्तव्यमवशिष्यत इति तदुच्यते "यो वेद निहितं गुहाया" मिति। जीवरूपेण गुहायां निहितं यो वेदे त्यर्थः। ननु कथमेतदुपपद्यते, उपक्रमे ब्रह्मविदिति प्राप्तृप्राप्ययो र्भेदेन निर्देशात्, अशनायाद्यूर्मियुक्तत्वतदभावाभ्यां तयोरैक्यासंभवाच्चे तिशङ्काद्वये प्रथमां निवारयति परमेव्योमन्निति । अत्रहि जीवाधारतया गुहायामेव ब्रह्म-सन्निधानमुच्यते । उपक्रमे नाप्राप्तप्राप्तिरुच्यते अपितु कण्ठगतचामीकरन्यायेन

प्राप्तस्यैवाप्राप्तत्वभ्रमोऽपोह्यत इति तदाशयः। द्वितीयां निरस्यति विज्ञानमयान्तकोशनिरूपणेन। अन्नमयादिकोशोपाधिका एव जीवस्योर्मयो न स्वाभाविक्यः। अन्नमयादिकोशविशिष्टचैतन्यमेव जीवः तत्र विशेष्यस्वरूपभूतं चैतन्यं ब्रह्मैवेति विशुद्धचैतन्यांशमादायस्वरूपैक्ये नानुपपत्तिरित्येतन्निरूपणाशयः। नन्वेवंसति कथ मुपक्रमोक्तंजीवस्यपरमव्योमशब्दितब्रह्माधारकत्वमुपपद्यते, उक्तरीत्याजीवैकदेशत्वेन तस्याधारत्वासंभवात्, लोके देवदत्ताद्यनन्तर्गतानामेवासनादीनां तदाधारत्वदर्शनादितिशङ्कां निवर्तयितुमुपक्रमाद्यवगतप्राधान्यकस्य ब्रह्मण आधारत्वप्रतिपादनतात्पर्यशालिन्यपिश्रुतिस्तद्वाचकपदमुपेक्ष्य ब्रह्मणः पुच्छत्वं कल्पयति। प्रतिपिपादयिषति च तद्द्वाराऽऽनन्दमयाधारताम्। यथा पक्ष्यन्तर्गतमेव पुच्छं शिरःपक्षाद्यवयवावच्छिन्न पक्ष्याधारो भवति, एवमत्र जीवान्तर्गतमेव विशेष्यस्वरूपं ब्रह्म जीवाधारो भविष्यती तितदाशय इति।

एवञ्चोपक्रमप्रतिज्ञातानन्त्योपपादकस्वरूपैक्यपरगुहानिधानोक्त्यसंभवाशङ्कापरिहारार्थान्नमयादिकोशवैशिष्टचकथनपर्यवसन्नविशिष्टजीवस्वरूपान्तर्गतत्वनिबन्धनपरमव्योमशब्दितब्रह्माधारत्वासंभवशङ्कानिवर्तनाय ब्रह्मणः पुच्छत्वकल्पनस्य तदनुसारेणानन्दमयस्यजीवस्य पक्षित्वकल्पनस्य च प्रसक्तौ तद्दृढीकरणायैव पूर्वेषां कोशानां पक्षित्वं निरूपित मिति। **तद्धेतुव्यपदेशाच्च**। आनन्दमयंप्रत्यपि कारणत्वव्यपदेशादानन्दमयैकदेशत्वंब्रह्मणो न संभवती त्यत्रपर्याये तदनेकदेशस्य पुच्छत्वकल्पनं पर्यायान्तरेषु तत्तदेकदेशानां तत्कल्पन मितिवैषम्यं यथा निरुत्तरंसह्यते, एवमत्र पुच्छपदस्याऽऽधारपरत्वं पर्यायान्तरेष्ववयवविशेषपरत्व मितिवैषम्यमपि सह्यता मितिसूत्राभिप्रायः। **मान्त्र—गीयते**। ब्रह्मपुच्छमित्यत्र स्वप्रधानमान्त्रवर्णिक-

ब्रह्मप्रत्यभिज्ञानात्तदनुमार्गेणचरमश्रुतंपुच्छपदमाधारलक्षकंभविष्यतीति । नन्वत्रावयवत्वाविवक्षायामानन्दमयोपासनं निरङ्कं स्या दिति पर्यायान्तरवत्तद्विवक्षणीय मित्यत्राह **नेतरोनुपपत्तेः** । इतरआनन्दमय उपास्यो न भवति. उपक्रमोपसंहारावगतज्ञेयब्रह्मतात्पर्यके प्रकरण उपासनविवक्षानुपपत्ते रित्यर्थः । ननु ब्रह्मप्रकरणेप्यन्नमयादिकोशेष्ववान्तरोपासनाविवक्षेवात्रापितद्विवक्षा स्या दित्यत्राह **भेदव्यपदेशाच्च** । अत्र भेदो नाम पूर्वेषुपर्यायेषुफलनिर्देशोत्रनेतिवैषम्यम् । ततश्च पर्यायान्तरेषु फलनिर्देशान्यथानुपपत्त्योपासनविवक्षायामप्यत्रानन्दमयस्यफलनिर्देशविनेवव्यपदेशा न्न तद्विवक्षेतितात्पर्यम् । नन्वत्रापिपर्याये आनन्दमयशेषभूतब्रह्मविषयकज्ञानरूपत्वेन ब्रह्मविद्यात्वं प्राप्ताया आनन्दमयोपासनाया उपक्रमोक्तस्सर्वकामावाप्तिरूपोमोक्षः फलं भविष्यति । मनोमयविज्ञानमयपर्याययोरिवात्रापिमोक्षफलान्वयाभ्युपगमेबाधकाभावात् । तत्र चित्तशुद्धिद्वारा तत्फलकत्वे ऽत्रापितथाभ्युपगमसंभवात् । तत्राह **अस्मिन्—शास्ति** । उपक्रान्तस्य सर्वकामावाप्तिरूपस्य फलस्य ब्रह्मभावापत्तिरूपत्वात्तन्निर्विशेषस्वतन्त्रब्रह्मविज्ञानफलमेव भवितुमर्हति, नानन्दमयशेषभूतब्रह्मविज्ञानफलम् । प्रकरणस्य पूर्वोक्तोपक्रमोपसंहाराभ्यां निर्विशेषस्वप्रधानब्रह्मतात्पर्यकत्वाध्यवसायेन तादृशब्रह्मविज्ञानस्यैव स्वातन्त्र्यप्रतीत्योपक्रमश्रुततद्भावापत्तिरूपफलसाधनतायास्तस्यैवाभ्युपगन्तव्यत्वात् । किञ्च नानन्दमयोपासनया मोक्षफलं संभवति । मनोमयोपासनं त्वानन्दंब्रह्मणोविद्वानितितत्रश्रवणा दुब्रह्मविद्यासाधक मिति स्वीक्रियते । विज्ञानमयोपासनमपि पाप्मनोहित्वेतिश्रवणा दुब्रह्मविद्याविरोधिकल्मषनिवृत्तिफलक मितिविज्ञायते । नानन्दमये फलोक्ति स्स्पष्टा । अतो न तदुपासनविवक्षा युक्ते तिसूत्रतात्पर्यम् । अक्षरार्थस्तु अस्मिन् पुच्छब्रह्मणि अस्यानन्दमयस्य जीवस्य

तद्योगं तदात्मनायोगं तद्भावापत्ति शास्त्रं शास्ती ति । अत्र पूर्वपक्ष उपक्रमोपसंहाराम्नातनत्तद्गुणविशिष्टब्रह्मपुच्छकानन्दमयोपासना ततएवमोक्ष-रूपंफल मितिमिद्ध्यति । सिद्धान्तेतु निर्विशेषब्रह्मपरमेवकृत्स्नंप्रकरणम् . तद्विज्ञानादेवमोक्ष इतिसिद्धियती तिविवेक इति ॥

तदेतत्सर्वमपि ब्रह्मविदाप्नोतीत्युपक्रमवाक्यस्य स्वारसिकस्वाभाविक भेदगर्भतायाः, सोऽश्नुतइत्युक्तब्रह्मप्राप्तेस्स्वतस्सिद्धबहुविधकल्याणगुणविशिष्ट-ब्रह्मानुभवरूपताया. आनन्दमयपदवाच्यस्यपरमात्मतया, पुच्छब्रह्मणोवस्तुत-आनन्दमयाभेदेऽपि बृहत्त्वरूपाकारभेदेनपुच्छतयानिर्देशोपपत्ते, तदुत्तरसंदर्भ-स्यानन्दमयविषयकतायाः, यतोवाचइत्यस्यानन्देयत्ताराहित्यपरतायाः, किंबहुना प्रकरणस्यैवास्यस्वाभाविकबहुविधविशेषविशिष्टानन्दमयरूपपरमात्मपरताया नि-ष्कम्पाभिर्बह्वीभिर्युक्तिभि स्स्थापितत्वेन निरस्तप्रायम् । अथापि तत्तदुक्ति र्विशिष्यापि प्रतिक्षिप्यते ।

यदुक्तमानन्दमयपर्यायोत्तरंप्रवृत्तेनेत्यादि : तन्न : तद्वाक्ययोजनाविषये संभावितानां पक्षाणां नैकस्यापि भवदभिमतार्थसाधनसामर्थ्याभावस्य च पूर्वमेव विस्तरेणोपवर्णितत्वात् । यत्तुपक्षान्तरमुक्तम्, 'तस्येति पूर्वस्येति च जन्यजनकभावे षष्ठी । य पूर्वस्यान्नमयस्यजन्यजनकभावेनसंबन्धी, एष-एवशारीरआत्मातस्यप्राणमयस्यापितथेत्येवंरीत्या सर्वत्र वर्णनीय मिति ; तदत्यन्तक्लिष्टम् जन्यजनकभावसंबन्धग्रहणेन जनकवाचिपदाप्रयोगेण घटस्य-दण्ड इत्यादिस्वरसप्रयोगविरहात् : समंबन्धिकार्थवाच्यात्मपदसमभिव्याहारे सति तस्यात्मा तन्निरूपितात्मत्ववा नित्यपेक्षितसंबन्धपरताया एव षष्ठ्या युक्तत्वेना र्थान्तरानवकाशाच्च । किंच ब्रह्मपुच्छंप्रतिष्ठे त्यस्यानन्दमयशेषत्व-मन्तरेणानन्दमयाधारपरत्वे तस्यैषएवशारीर इत्यत्र तच्छब्देनाव्यवहितप्रधान-

ब्रह्मग्रहणस्यैव युक्तत्वेन ब्रह्म प्रति कारणीभूतात्मान्तरसिद्धिप्रसंगः । प्रमाणान्तरानुरोधेन ब्रह्मणआत्मान्तराभावादेवमर्थवर्णनायोग इतिचेदानन्द-मयस्यापिपरमात्मतया तंप्रत्यात्मान्तरवर्णनायोगोपि तुल्य इति तात्पर्यान्तरमेव युक्तमिति महृदयं ग्राह्य मिति ।

यदप्युक्तं गुहानिहितत्वरूपमान्तरत्वं—जैवेनरूपेणेत्यादि: तदपि न । ब्रह्मणो जैवब्राह्मात्मकरूपद्वयवत्त्वे प्रमाणादर्शनात् । युष्माभिरेव तत्रतत्र स्वाभिमतार्थविरोधपरिहारप्रधानसामग्रीत्वेनाप्रामाणिकरूपद्वयकल्पनात्। उपक्रमे वेदनकर्तृत्वेनप्रस्तुतस्यजीवस्या नुपदमेवतत्कर्मत्वमङ्गीकृत्य गुहा-निहितत्वाभिधानमत्यन्तासंगतंच । यद्दत्यनेनापि तस्य परामर्शादवस्थाद्वया-भ्युपगमश्च सतिघण्टापथे न युक्तः । परमव्योमशब्दस्यब्रह्मपरत्वात्तदाश्रितं-रूपंजैवमेवेत्यप्ययुक्तम् । अत्रत्यपरमव्योमशब्दस्य कैरपिभाष्यकारैः परमात्म-परत्वेनाव्याख्यानात् । युष्मत्कूटस्थैरव्याकृताकाशपरत्वेन भूताकाशपरत्वेन च हि 'व्योमन्याकाशेऽव्याकृताख्ये'इत्यादिना, 'हार्दमेव'त्वित्यादिना च स व्याख्यातः । "परमेव्योमन्प्रतिष्ठिते"त्यत्रापि न परमात्मपरत्वं तैरुक्तम् । "परमेव्योमन् हृदयाकाशगुहायांपरमआनन्देऽद्वैते प्रतिष्ठिता परिसमाप्ते" ति भाषणात् । अनया च वचनव्यक्त्या परमेव्योमन्नित्यनयो र्वैयधिकरण्यं व्योमशब्दस्य स्वयंपूर्वोक्तं भूताकाशपरत्वंचाश्रित मिति हि प्रतीयते । वस्तुतस्तत्रभार्गवविद्यायाःपरमव्योमप्रतिष्ठितत्वोक्त्या ऽन्यथानुपपत्त्यातस्यपर-मात्मपरत्वाङ्गीकारेऽपि, अत्र तादृशगमकाभावेन स्वारसिकं प्रमाणान्तरानुगुणं च सर्वोत्कृष्टस्थानपरत्वं न हातुं युक्तम् । किंचात्रपरमव्योमपदस्यपरमात्मपरत्वे ऽत्रजीवाश्रयत्वस्यब्रह्मणिसिद्ध्या 'विज्ञानमयादन्योन्तरआनन्दमय' इत्यत्रापि विज्ञानमयपदवाच्यजीवाश्रयत्वमानन्दमयस्यप्रतीयत इति प्रत्यभिज्ञाबला

दानन्दमयस्य ब्रह्मत्वमेवमिद्ध्येत् । तत्र विज्ञानमयस्यजीवत्वं नाङ्गीक्रियत इतिचेत्. विचित्रमेतत्, यज्जीवपरत्वेनश्रुतिषुप्रसिद्ध मन्यपरत्वेनाप्रसिद्धं विज्ञानमयपदं तत्परं नेष्यते, परमव्योमपदं तु प्रायशोऽन्यपरत्वेनैवप्रसिद्धं, प्रकृते मत्यंज्ञानमनन्तंब्रह्मेतिमत्यपिबाधे परमात्मपरं स्वीक्रियत इति । एवं जीवरूपेणेत्यध्याहारश्च स्वेच्छाकृतो न युक्तः । बुद्ध्युपाधिको जीवो विज्ञानमय इत्याद्यप्यसंगतम्: बुद्ध्यादिरूपोपाध्यवच्छिन्नस्य बुद्ध्यादिविकारत्वाभावेन विकारवाचकमयडन्तपदबोध्यत्वायोगात् । नहि लोके शास्त्रे वा घटमयआकाश इत्येवंव्यवह्रियतइत्यादि प्रागेवोक्तम् । आनन्दपदस्याज्ञानरूपोपाधिपरत्वं च परिहसनीयम् । अकाण्डे तयोस्तत्रलक्षणेत्यपि केवलंसाहसम् । तस्मा द्विज्ञानमयाद्भेदकथनमानन्दमयस्यजीवातिरिक्तत्वंसाधयत्येवे त्यलम् ।

यदप्युक्त मानन्दमयपदस्यापिजीवपरत्वंदृश्यत इति, तदपि न; आनन्दमयोह्यानन्दभुगि त्यत्रानन्दमयपदस्य परमात्मपरत्वस्यैवप्रतीतेः । एषसर्वेश्वर इत्युत्तरत्रसर्वेश्वरत्वाद्याम्नानात् । नचवाच्यं तदाम्नानं तस्य परमात्माभेदाभिप्रायेणेति । तदभेदस्य भेदपरबहुप्रमाणबाधितत्वात् । आनन्दमयस्य परमात्मन स्सुषुप्तिसंबन्धो जीवाभेदाभिप्रायेणे ति कुतो नोच्यते । नचोपक्रमश्रुता सुषुप्तिरेव मुख्यतया नेये तिवाच्यम् आनन्दमयपदस्यानन्याधीनप्रचुरानन्दवत्परत्वस्वारस्यात्परमात्मपरत्वे सिद्धे तस्मिन् सुषुप्ते-र्जीवद्वाराऽन्वयाभ्युपगमे बाधकाभावात् । नहि सुषुप्ते प्रथमश्रुतत्वमात्रेण "काठिन्यवान् योबिभर्ती"त्यादाविव किंचिद्द्वारापि तदन्वयोपपत्तावानन्दमयपदस्वरसार्थत्यागोयुक्तः । आनन्दोब्रह्म, आनन्दंब्रह्मणोविद्वानित्याद्यनुसारेणाप्यानन्दोक्तिस्थले तस्यब्रह्मसंबन्धित्वप्रतीति र्हि स्वरसा ।

नचोपक्रमानुसारेणसर्वेश्वरादिपदस्वरसार्थस्त्यज्यते । अतस्सर्वेश्वरादिपदस्येवा-नन्दमयपदस्यापि जीवपरमात्माभेदाभिप्रायेण युष्माकमुपपत्ते स्सेतत्पदस्यजीव-वाचित्वं न सिद्ध्यति ।

अत्रायं निष्कर्षो ऽवमेयः "यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थानएकीभूतः प्रज्ञानघनएवानन्द-मयोह्यानन्दभुक्चेतोमुखःप्राज्ञ स्तृतीयःपाद" इतिमाण्डूक्योपनिषदि श्रूयमाण-मानन्दमयपदं परमात्मपरमेव । अत्र तत्सुषुप्तमित्यत्र सुषुप्तपदेऽधिकरणेक्त-प्रत्ययः । अस्यैव विवरणं सुषुप्तस्थान इति । अत्रसुषुप्तपदंभावार्थकक्तान्तम्, स्थानपदस्वारस्यानुरोधात् । तत्सुषुप्तमितिसामान्यतस्सुषुप्त्यधिकरणत्वेनोक्तंवस्तु परमात्मेति प्रतिपाद्यते सुषुप्तस्थानइत्यादिना । अन्यत्रापि सुषुप्तिस्थानस्य परमात्मत्वं स्पष्टं श्रूयते । "अयंपुरुषः प्राज्ञेनात्मनासंपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, तद्वाअस्यैतदाप्तकाममात्मकाममकाम" मित्यादौ । आप्तकामत्वादीनां परमात्मधर्मत्वस्य प्रस्फुटत्वात् । एवं तत्र सुषुप्तिस्थानभूतः प्राज्ञेनात्मनेत्युक्तः परिष्वञ्जकः प्राज्ञ एवा त्रापि सुषुप्तिस्थानएकीभूतः प्राज्ञ इत्याभ्यां प्रत्यभिज्ञायत इति न तत्समानाधिकरणस्यास्यानन्दमयपदस्य-जीवपरत्वशङ्का ऽवकाशं लभते । प्राज्ञशब्दश्च "प्राज्ञवत्" इतिदृष्टान्तीकरणा त्परमात्मनिसुप्रसिद्ध स्सूत्रकृतैव ज्ञाप्यते । अपिचात्रोक्तानांसुषुप्तस्थानत्व-प्रज्ञानघनत्वानन्दभुक्त्वचेतोमुखत्वप्राज्ञत्वानां शब्दशक्तिस्वाभाव्यादेव परमात्म-धर्मत्वस्यावश्यकतया तन्मध्यपतितानन्दमयत्वस्यापि तद्धर्मत्व मेवेत्यतोपि तत्पदंतत्परमेष्टव्यम् । तथाहिः सुषुप्तस्थानएकीभूतः जीवसुषुप्तिस्थानेषु नाडीपुरीतद्ब्रह्मसु प्रधानस्थानभूतः । "तदभावो नाडीषु तच्छ्रुतेरात्मनिचे" ति हि सूत्रकारः । यद्वा सुषुप्तस्थानएकीभूत एकत्वं प्राप्तः स्वयंसुषुप्ति-

स्थानतयास्थित इति यावत् । अथवा सुषुप्तं नाड्यादिस्थानं यस्य स सुषुप्तस्थानः । पर्यङ्कस्थानीयं हि ब्रह्म प्रासादखट्वास्थानीयनाडीपुरीतदाधारम् । प्रज्ञानघनः अनन्याधीननित्यसिद्धसर्वसाक्षात्कारप्रचुरः । आनन्दभुक् स्वतस्सिद्धनिरतिशयानन्दानुभविता, रागद्वेषाद्यौपाधिकाकारानुपहततया केवलानन्दरूपं सुषुप्तं जीव मनुभवतीतिवा ऽऽनन्दभुक् । चेतोमुखः विशुद्धं चेतो ज्ञानसाधनं यस्य, विशुद्धमनोग्राह्यः । प्रकर्षेणजानातीतिप्रज्ञस्सएवप्राज्ञः ; ज्ञानस्यप्रकर्षश्चानन्याधीनत्वसर्वविषयकत्वादिः । "यस्सर्वज्ञस्सर्ववित्" इत्यत्रेव प्रज्ञानघनत्वप्राज्ञत्वयोरपुनरुक्तिः । अनवच्छिन्नज्ञानस्वरूपत्वं वा प्रज्ञानघनपदेन विवक्षितम् । एवममीषांपरमात्मधर्मत्वं स्फुटप्रतीतिकम् । नहि प्रज्ञानघनादिपदानामुक्तार्थपरत्वे संभवति सातिशयतत्तदर्थपरत्वं युक्तम् । शब्दशक्तेस्संभावितसर्वप्रकारोत्कर्षविषयताया उत्सर्गसिद्धत्वात् । तत्रतत्रपूर्वैस्तथाङ्गीकृतत्वाच्च । अत्र " सुषुप्तोहिभूतपूर्वगत्याप्राज्ञउच्यते " इति प्राज्ञपदव्याख्यानमपि चिन्त्यम् ; परमात्मन्येवप्राज्ञपदस्यावयवार्थपौष्कल्यात्, तत्र श्रुतिस्मृतिसूत्रेषु प्रयोगोपलम्भात्, पूर्वोक्तरीत्या तत्पदस्य तत्परतायाआवश्यकत्वात्, तत्परिग्रहे साम्प्रतिकस्यैव प्राज्ञत्वस्य सौलभ्यात्, अन्यथा प्राज्ञपदस्य लाक्षणिकत्वप्रसंगाच्च । यदपि " प्रज्ञप्तिमात्रमेवास्यासाधारणंरूपमितिप्राज्ञ " इति द्वितीयं व्याख्यानम् ; तदपि चिन्त्यम् ; तत्र प्रज्ञप्तिपदेन धर्मभूतप्रकृष्टज्ञानग्रहणे ऽस्यांदशायांतदभावेन भूतपूर्वगत्याश्रयणेन पूर्वोक्तपक्षानतिरेकात् । सविषयज्ञानस्यैव वैशद्यात्मकप्रकर्षसत्त्वेन जाग्रत्स्वप्नस्थानयोरेव तत्संभवात् । तेनधर्मिस्वरूपग्रहणे प्राज्ञपदस्यप्रज्ञप्तिस्वरूपइत्यर्थे व्युत्पत्तिविरोधात् । आतश्चोपसर्गेइतिस्मृत्या कर्तर्येव जानातेःकप्रत्ययविधानेन तस्य प्रज्ञप्तिपरत्वासंभवात् । एवंएषसर्वेश्वरइत्यादिसंदर्भोऽपि परमात्मतासाधकः ।

अत्र सुषुप्तजीवस्येश्वराभेदंगृहीत्वामेवैश्वरत्वादिप्रतिपादकत्वभाषण मतिक्लिष्टं प्रमाणविरुद्ध ञ्चेतिचस्पष्टमुक्तम्।

एवञ्चानन्दमयपदमपि प्राचुर्यार्थकमयडन्तं परमात्मपरमेवयुक्तंप्रतिपत्तुम्। प्राचुर्यार्थएवात्रमयडिति शाङ्करटीकाकारोप्याह, "प्राज्ञस्यानन्दविकारत्वाभावे कथमानन्दमयत्वविशेषण" मित्याशङ्क्य "स्वरूपाभिव्यक्तिप्रतिबन्धकदुःखाभावात्प्राचुर्यार्थत्वं मयटो गृहीत्वा विशेषणोपपत्तिं दर्शयती" ति, "तस्मादानन्दप्राचुर्यमेवास्यस्वीकर्तुंयुक्तमित्यर्थ" इति च। परंत्वत्र मयटः प्राचुर्यार्थत्व मानन्दमयस्यजीवत्वं निवारयति, सुतरां सुषुप्तजीवत्व मित्यस्माभिरुच्यते। सुषुप्तजीवस्यवाह्यान्तरसर्वपदार्थविषयकज्ञानाभावस्य तत्रतत्रश्रवणेन ज्ञानविशेषात्मकानन्दवत्त्वस्यैव दुर्लभतया तत्प्राचुर्यकथाया दूरनिरस्तत्वात्। तस्यानन्दाभ्युपगमे 'नाहमत्रभोग्यंपश्यामी'त्यादिप्रमाणव्याकोपप्रसंगात्। आत्मस्वरूपवद्धर्मभूतज्ञानं तस्यामपिदशायां निर्विषयं वर्ततइति त्वन्यत्। तादृशंतदादायानन्दप्राचुर्यव्यवहारोपपत्तेस्संपादयितुमशक्यत्वाच्च। "स्पन्दनायासदुःखाभावादानन्दमयआनन्दप्राय" इति भाषणं तदनुगुणापूर्वोक्ताटीका च न सामञ्जस्यमनुभवितुमर्हतः तथासत्यानन्दमयशब्दस्यौपचारिकत्वप्रसंगात्, मुख्यत्वे संभवति तत्परिग्रहायोगात्। किंच भारापगमेसुखीसंवृत्तोऽह मित्यादौ दुःखाभाव उपचारात्सुखिशब्दप्रयोगदर्शनेऽपि सुखमयसुखप्रचुरादिशब्दा स्तदभावमात्राभिप्रायेण न कुत्रापि प्रयुक्ता उपलभ्यन्त इति, अत्रैवंव्याख्यानमतिसाहसम्। नहि मणिर्द्युमणिर्वा स्वस्वरूपप्रकाशप्रतिबन्धकाभावाभिप्रायेण कान्तिप्रचुर इत्युच्यते; कथंतर्हि? स्वरूपातिरिक्तकान्तिमत्त्वे तस्याःकेनचिद्धेतुनाऽऽधिक्ये च सति तथाव्यवह्रियते। अतएव "अत्यन्तानायासरूपाहीर्यंस्थिनिरनेनानुभूयतइत्यानन्दभु"

गि "तिभाषणमप्यसंगतम्। नहि देवदत्तस्य दोषाभावमात्रमभिप्रेत्य गुणाढ्यत्व-गुणज्ञत्वादिव्यवहार उपलभ्यत उपपद्यते वा। नहि जीवस्य तस्यां दशायां कस्याप्यनुभवोऽस्ति। तदभ्युपगमे सुषुप्त्युच्छेदप्रसंगात्। "यथालोके-निरायासस्स्थित" इत्याद्यपि चिन्त्यम्: लोकेनिरायसतयास्थितविषयेऽयं-सुखीत्युपचाराद्व्यवहारेऽपि, अयंसुखभुगानन्दभुगितिव्यवहाराभावेन दृष्टान्ता-सिद्धेः। "एषोस्यपरमआनन्दइतिश्रुते"रिति तत्प्रमाणोपन्यासोप्यसंगतः, सुषुप्तजीवस्य तस्यां दशायां निरायासस्थितेः परमानन्दरूपत्वे तच्छ्रुतेः प्रमाणत्वासंभवात्। तत्र हि भाष्यकारै स्सौषुप्तिकस्यसर्वात्मभावस्यपरमानन्द-त्वप्रतिपादकतया व्याख्यानं कृतम्। नहि जीवस्य सुषुप्तिकाले ऽनाया-सस्थितिस्सर्वात्मभावश्चाभिन्नौ। किञ्च तत्राकाण्डे सर्वात्मभावः कथं संपादितः। तस्येदम्पदवाच्यजीवं प्रति परमानन्दत्वादिकं वा कथमुपपद्यते? नह्यत्र सर्वमात्माभवती तिश्रूयते। अपितु प्रिययासंपरिष्वक्तस्येव प्राज्ञेन-संपरिष्वक्तस्य वाह्यान्तरज्ञानाभावमुक्त्वा पुनरपि "सलिलएकोद्रष्टाऽद्वैतो-भवती"ति, सलिलेसलिलान्तरमिव परमात्मनिलयविशेषंप्राप्तो जीवो ऽद्वैतोभवति, देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराभि-मानकालुष्यरहितोभवती त्युच्यते। अस्यामप्यवस्थायां द्रष्टेति जीवस्य ज्ञानाश्रयत्वव्यपदेशादपि न पराभिमताद्वैतसंभवः। इत्थञ्च तत्र सर्वात्म-भावस्याप्रकृतत्वा त्तदुक्तिरविश्वसनीयैव। एवं तस्य परमानन्दत्वमपि दुरुपपादम्; सर्वात्मभावदशायां जीवस्यैवाभावेन तंप्रति सौषुप्तिकसर्वात्म-भावस्य परमानन्दत्वासंभवात्। अपिच तत्र "परमआनन्दोनित्यत्वा" दित्युक्तिः, माण्डूक्योपनिषदि "आनन्दप्रायोनानन्दएवानात्यन्तिकत्वादि-त्युक्तिश्च परस्परविरुद्धे। "नहि सुषुप्तेनिरुपाधिकानन्दत्वं प्राज्ञस्या भ्युपगन्तुं

शक्यम्, मुक्तत्वात्पुनरुत्थानायोगा" दितिटीकोक्तिरेव 'नित्यत्वादिति-वृहदारण्यकभाष्योक्तिं निरुणद्धि । एवञ्च तत्र परमआनन्द इत्यस्य निरुपाधिकानन्दपरत्वस्यैवस्वारस्यादभ्युपगन्तव्यत्वेन स्वयमेवानित्यत्वोक्त्या चात्यन्तिकानन्दस्यैव ग्रहणसिद्ध्या, अत्र 'आनन्दप्रायोनानन्दएवेत्यादिस्वोक्त्या "मयटस्स्वरूपार्थत्वादानन्दमयत्वमानन्दत्वमेवकिन्नस्यात्—नहिसुषुप्तेर्निरुपाधिके"त्यादिटीकोक्त्याचानात्यन्तिकनार्हगौणानन्दविवक्षासिद्ध्या च "एषोस्य-परमआनन्द"इति प्रमाणोपन्यास श्चिन्त्य एव । किंच एषोस्येत्यस्य निरायासस्थितेस्सौषुप्तिकसर्वात्मभावस्यवा परमानन्दत्वबोधनपरत्वे "एत-स्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्ती" त्यनन्तरवाक्यस्य त्वदभि-मतार्थकत्वासिद्धिः । वैषयिकानन्दानां निर्विशेषब्रह्मात्मकाखण्डानन्दलेशरूपत्वं प्रतिपादयतीदमिति हि भवन्मतम् । तच्चैवंसति न सिद्ध्यति । नि-रायासस्थितिसौषुप्तिकसर्वात्मभावान्यतरविषयकतयाएवानन्दपदस्यावश्यकतया तदन्यतरलेशत्वस्यैव लौकिकानन्दजाते तेन वाक्येन सिद्धेः । आत्मा, निरायासस्थितिः, सर्वात्मने त्येवमादे स्सामानाधिकरण्येनव्यवहारस्य कर्तुमशक्यत्वात् । वस्तुतो जीवसुषुप्तिस्थानभूतस्य सलिलवत्स्वच्छस्वभावतया-सलिलपदेनोपक्रान्तस्य परमात्मनः परमानन्दरूपत्वमेव तया बोध्यते । सुषुप्त्याधारभूते परमात्मन्येव श्रुत्यन्तरे 'ब्रह्मलोकंनविन्दन्ती'तिब्रह्मलोक-संशब्दना देषब्रह्मलोक इत्यत्रापि तस्य शब्दस्य तदर्थकताया एव न्याय्यतया तदनुसारेण "एषास्यपरमागतिः, एषास्यपरमासंपत्, एषोस्यपरमोलोक एषोस्यपरमआनन्द" इति सर्वत्राप्येतच्छब्देन परमात्मन इदंशब्देन जीवस्य च ग्रहणमावश्यक मित्यस्यसंदर्भस्य सुषुप्त्याधारभूतपरमात्मनस्सुषुप्तजीवं-प्रतिपरमगतित्वादिप्रतिपादनद्वाराब्रह्मलोकत्वसमर्थने तात्पर्य मिति प्रकरण-

परामर्शिनां स्वारस्यदत्तदृष्टीनां स्पष्ट मिति सर्वथा तच्छ्रुतिप्रमाणीकरण-मत्रानुपपन्नमेवेति । तस्मा न्माण्डूक्यश्रुतिगतानन्दमयपदेटीकाकारोक्तरीत्या-जीवस्यानन्दविकारत्वाभावेन मयटोविकारार्थत्वायोगेन, स्वार्थिकत्वस्यान्याय्य-तया च परिशेषात्प्राचुर्यार्थकत्वे सिद्धे, प्राचुर्यस्य प्रमाणप्रतिपन्ननिरतिशयत्व-रूपतया वाच्यार्थाबाधाय च तत्पदस्य परमात्मपरत्वमकामेनाप्यङ्गीकार्य मिति तदनुरोधेनान्योन्तरआत्मानन्दमयइत्यत्रापि भवदनभिमतसिद्धिरेवे ति नेहा-न्यार्थकत्वप्रत्याशाऽवकाशः । अत्र माण्डूक्यश्रुतिगतानन्दमयपदे मयटः प्राचुर्यार्थकत्वं वदता, तैत्तिरीयेपि तस्य तदर्थकत्वसिद्ध्याविष्कारेणा नन्दमयाधिकरणसूत्रार्थान्यथाकरणाद्यास्पदभूतस्सर्वोपि परेषां कलह स्तट्टीका-कारेणैव शान्तिं नीत इतिसम्यगवेक्षणीयम् ।

यदपि बुद्धेर्विज्ञानविकारत्वेनेत्यादि, तदपि न ; बुद्धिविज्ञानयोरैक्य-स्यैव कोशप्रयोगावगततया बुद्धेर्विज्ञानविकारत्वोक्तेर्हेयत्वात् । भवतापि हि 'विज्ञानशब्दो हि बुद्धावेव प्राय श्श्रुतिषु प्रसिद्ध' इत्यादिना तयोरैक्यमेव प्रसाध्यते । एवमभेदमुपपादयतैव भवता मध्ये तयो र्विकारविकारिभावमुपपाद्य भेदोपिसाध्यत इति चित्रम् । नचवाच्य माधिदैविकविज्ञानंबुद्धिविकार्यन्यत् बुद्ध्यभिन्नंचविज्ञानमन्य दिति न दोषः इति । विज्ञानद्वैविध्यस्य तयोर्विकारविकारिभावस्य च भवत्संकेतमात्रसिद्धत्वेनोपेक्ष्यत्वात् । यदप्या-नन्दमयाब्रह्मत्वंबाध्येनेति ; तदपि न ; तदब्रह्मत्वस्यासिद्धत्वात् । नहि ब्रह्मपुच्छमिति निर्देशमात्रेणानन्दमयस्यतदपेक्षयाऽव्यक्त्यन्तरत्वसिद्धिः । आकारभेदेनोभयथानिर्देशसंभवात् । अन्यथा तादृशोक्तिस्वारस्यसिद्धस्यात्म-त्वेनोक्तानन्दाब्रह्मत्वस्य बाधो न युज्यत इति तस्याप्यब्रह्मत्वरक्षणप्रसंगात् । आनन्द इति परंब्रह्मेति खलु कूटस्थोक्तिः । यदपि यतोवाच इतिवाक्यानु-

सारा त्प्रकरणं निर्विशेषपर मिति ; तदप्यसंगतम् तस्यानवधिकातिशयानन्द-रूपस्वाभाविकमहागुणप्रतिपादकत्वस्यैव सुष्ठुनिरूपितत्वेन प्रकरणेन विविध-गुणजातप्रतिपादने प्रतिवन्धकत्वोक्तेर्विरुद्धत्वात् अन्यथा तत्रैवानन्दंब्रह्मणो-विद्वानित्युक्तेरुन्मत्तप्रलपितत्वापातात् । यदपि स्वपक्षे वाचइत्यासंकुचितार्थकत्व-कथनम्, तदपि न; सगुणनिर्गुणभेदेन ब्रह्मद्वैविध्यस्य. गुणजातौपाधि-कत्वस्य, अधिष्ठानमात्रपरिशेषस्य त्वदुक्तरीत्यानिर्गुणवाक्यप्रतिपाद्यस्वरूपा-पेक्षयामुक्तिदशाभिव्यङ्ग्यस्वरूपवैलक्षण्यस्य चानन्यथासिद्धप्रमाणशकलादर्शनेन स्वमनोरथमात्रसिद्धतयेदशरीत्याऽसंकोचवर्णनस्यायुक्तत्वात् । किञ्चात्र शब-लितस्वरूपनिर्गुणवाक्यप्रतिपाद्यस्वरूपाभ्यां विलक्षणं यन्मुक्तिदशाभिव्यङ्ग्यं-स्वरूप मङ्गीक्रियते तत्प्रतिपादकप्रमाणवचनानां ततो निवृत्ति र्नास्तीति वाचइत्यस्यासंकुचितार्थकत्वम्, तस्यप्रमाणागम्यत्वे तु तुच्छत्वप्रसंगः । स्वप्रकाशत्वेन स्वयमेवसिद्ध्यतीतिकथन न्त्वश्राव्यम् । एवमेव तैस्तैर्वादिभि स्वस्वाभिमतार्थसाधनप्रवृत्तौ भवतो निरुत्तरत्वप्रसंगात् । किंबहुना, अत्र श्रुतौ यत इति यत्पदेन मुक्तिदशाभिव्यङ्ग्यंयादृशंविशुद्धंस्वरूपमितित्वदीयवाक्येन च त्वत्कल्पिततृतीयस्वरूपस्य प्रतिपादितत्वा त्तस्यसंकोचो निस्संकोचमायात-एव । अपिच निर्गुणवाक्यानां मुक्तिदशाव्यङ्ग्यस्वरूपाप्रतिपादकत्वे शबलित-स्वरूपप्रतिपादकसगुणवाक्यापेक्षया वैषम्यं दुरुपपाद मिति विभागकथनम-संगतम् । सगुणवाक्यान्यप्यौपाधिकगुणविशिष्टमेव हि बोधयन्ति । ब्रह्मणश्शबलत्वंचौपाधिकगुणविशिष्टत्वमेव । तदत्राप्यभ्युपगतम्, निर्गुण-वाक्यार्थ—विशुद्धस्वरूपाभावा'दिति वदता । नचवाच्यं निर्गुणवाक्यानां स्वरूपमात्रेतात्पर्य मिति ततो वैषम्यमिति ; सगुणवाक्यानामपि तत्रैव तात्पर्यस्य भवद्भिरुपवर्णितत्वात्, अन्यथा गुणानां सत्यत्वप्रसंगात् ।

उभयेषामपि वाक्यानां स्वरूपमात्रतात्पर्यकत्वे, औपाधिकगुणसहत्वे अधिष्ठानमात्रात्मकपरिशेषितविशुद्धस्वरूपाविषयकत्वे च तुल्ये गुणनिषेधतद्भावमात्रेण वैषम्याश्रयणायोगात् । सर्वथा संकोच आवश्यक एवेति । वाचां त्वत्पक्षे प्रवृत्ति र्नास्ती त्यप्यसंगतम् त्वन्मत एव विशुद्धस्वरूपस्य प्रमाणागम्यतया वाचां तत्र प्रवृत्तिवर्णनासंभवात् अन्यविषयेप्रवृत्तत्वे ततो निवृत्ते स्तासां दुर्वचत्वात् । अस्मन्मते पाटलीपुत्रं गन्तुकामस्य पथि किञ्चिद्गतस्य ततोनिवृत्तिवदत्रापिप्रवृत्तिनिवृत्त्योस्संभवाच्च । अत्रवक्तव्यं सर्वं पूर्वमेव सुष्ठूक्तम् । यदपि तात्पर्यग्राहकलिङ्गवत्त्वादेकेनापिबहुबाधो युक्त इति, तदपि न ; यतोवाचइत्यस्य सर्वात्मना त्वदुक्तार्थासंभवस्योक्तत्वेन द्विस्तदभ्यासस्यास्मदभिमतसाधन एव जागरूकत्वात् । आनन्त्योपपादकतयाप्रवृत्तस्यसृष्टिवाक्यस्यापवादसापेक्षत्वकथनमत्यन्तहास्यम् ; सृष्टिवाक्येनोपक्रमश्रुतानन्त्यविरुद्धगुणादिप्रतिपादनस्यानन्तरंकेनचिदपवादवाक्येनतन्निषेधस्यच प्रक्षालनाद्धीतिन्यायनिरस्तत्वेनाभ्युपगमायोगात् । वस्तुतोऽसन्तंगुणगणंस्वयमेवप्रतिपाद्यतन्निराकरणापेक्षया तद्वाक्याप्रवृत्तिरेव खलु वरम् । नचवाच्यं तदप्रवृत्तौ ब्रह्मणः कारणत्वं न सिद्ध्यतीति तत्प्रवृत्तिरेष्टव्या तथाच तदुपयुक्तगुणकथनमपिप्राप्नोतीति तन्निषेधःकर्तव्य इति ; सर्वस्यापि त्वत्पक्षे मिथ्यात्वेन तत्सिद्धौ प्रयोजनलेशाभावात् । सर्वमिदंप्रतीयमानंनेत्येकोक्त्यैव सर्वसामञ्जस्यात् । सृष्ट्यादिकथनस्य सृज्यवर्गसत्यत्वभ्रान्तिजनकतया विरुद्धत्वेन तदकथनस्यैव न्याय्यत्वाच्च । ननुसर्वमिदंनेतिवाक्यमात्रेणजगत्सत्यत्वभ्रमो न निवर्तेत ; युक्तेरपेक्षितत्वात्, अतस्तदर्थंबह्वारम्भ इति चेन्न ; तदारम्भेपि तत्र युक्तेरप्रतिपादनात् । तदानीमपि तदसत्यत्वे यतोवाचइति वाक्यमेव खल्ववलम्बसे । तच्चासत्यत्वं तादृशोक्त्यैवलघीयस्यार्थान्तर-

भ्रमाजनिकया सिद्ध्यती ति विविधवाक्यारम्भो विपरीतफल एव । अपिच यथाकथञ्चिदभेदबोधनेदम्परतया श्रुतय स्तदुपयोगिनीमुपादानतां ब्रह्मणि कल्पयन्ति, नतु सा वस्तुसती । अतएव यथेच्छं सृष्टिप्रकारं बहुधा विभिन्नं वदन्ति, तस्यावास्तवत्वेन यथाकथमपि वक्तुंशक्यत्वादिति खलु भवतां हार्दो ऽभिसंधिः । एवञ्च सृष्टिश्रुतीनामैकरूप्यमनावश्यकमभिप्रयतां विभिन्नसृष्टिप्रकारपराभिश्श्रुतिभि रुपादानतायामेवाविस्रम्भ आधीयत इति तन्मूलकोऽभेदनिश्चयोपि दुरधिगमः । अनाघ्रानदोषगन्धैरद्वैतश्रुतिवाक्यैरव-गम्यमानेर्थे कथमास्तिकस्याविस्रम्भ इतिचेत् ; हन्ततर्हि युक्तेरनपेक्षितत्वा-देव सृष्टिश्रुतयो व्यर्था विपरीतफला वेति विचिन्तनीयमिति । एवं बृहत्त्वबृंहणत्ववेद्यत्वप्राप्यत्वसर्वोत्कृष्टत्वसत्यत्वज्ञानत्वरूपपरमोपक्रमश्रुतार्थ – विरुद्धत्वेनानन्त्यस्यनिर्विशेषत्वरूपत्वमेव न संभवति । तथा देशकालवस्तु-परिच्छेदरहितवाचिनानन्तपदेन वस्तुतोदेशकालवस्तुसद्भावस्यान्यत्रतत्परि-च्छिन्नत्वस्यात्रब्रह्मणितदभावस्यचैव स्पष्टमवगमेन सर्वशून्यत्वकथायाः कुत्रास्त्यवकाशः ? एवं यतोवाचइतिश्लोकोमनोमयपर्यायस्थो न निर्विशेषपरः ; तदुत्तरं, "अन्योन्तरआत्माविज्ञानमयः, आनन्दमयः, सोकामयत, भीषा-स्मादित्येवंबहुविधविशेषप्रतिपादनविरोधात् । नाप्यन्ते वर्तमानः ; पूर्व-सरूपस्यतस्यतद्विरुद्धार्थकस्वायोगात् । उत्तरार्धएव, आनन्दंब्रह्मणोविद्वानिति-बहुभेदवर्णनाच्च । तत स्ततोब्रवीतिचभूय इति नास्य मध्यपातिनः पूर्वोत्तरविरुद्धार्थपरत्वप्रसक्ति रिति ।

यदपि ब्रह्मविदित्यत्राप्नोतेर्भवत्यर्थकत्ववर्णनम् , तेनापि स्वमते उपक्रमविरोधः स्वस्यस्वकीयसिद्धान्तस्थापनाभिमानश्च स्पष्टमेव दर्शितः, तस्य तदवाचकत्वात् । एतदनुसारेण ब्रह्मवेदब्रह्मैवभवतीत्यत्र भवतेः

प्राप्त्यर्थकत्वं कुतो न स्या दिति प्रतिबन्दीपराहतत्वाच्च। वस्तुतस्त्वेतदेव- युक्तम्, धातोरेवान्यार्थकत्वाङ्गीकारापेक्षया भूप्राप्तावितिपठितप्राप्त्यर्थकधातो- रिदंरूपम्, पदव्यत्ययश्छान्दस इत्यङ्गीकारस्यैव युक्तत्वात्। ब्रह्मपदस्य द्वितीयान्ततयाप्युपपन्नत्वात्, परशेषैतैकरसस्यजीवस्यब्रह्मप्राप्तिफलस्यापि मुख्यस्य परमात्मसंबन्धित्वानुसंधानायपरस्मैपदोपपत्तेश्च। नचवाच्यमेवमर्थाङ्गी- कार एवकारस्वारस्यप्रसंग इति। ब्रह्मप्राप्ते र्वेदनातिरिक्तोपायनिषेधपरतया सुसंगतत्वात्। इत्थञ्चसति नान्यःपन्थाइतिवचवान्तरैकार्थ्यञ्च भवति। ब्रह्मवित्भेदगर्भब्रह्मकर्मकप्राप्तिमानेवभवति नतु तदैक्यमापद्यत इत्यर्थोप्यत्र सांगत्यनर्हति। ब्रह्मविद्ब्रह्मैवप्राप्नोति नत्वविद्वानिव स्वर्गनरकादिकमन्यद्वा- किञ्चिदि तिवाऽर्थः। तेनच विस्रम्भवर्धनेन प्रवृत्त्युत्तम्भन मिति। परमार्थतस्तु न वय मत्रैक्यप्रतीति प्रतिषेधामः। एतदादिवाक्यसिद्धमैक्यमनूद्यैव तस्य, "तस्मिन्नेवयजमानास्सैन्धवघनइवलीयन्त्येषावै ब्रह्मैकता नाम। अत्रहि- सर्वेकामास्समाहिता" इति मैत्रायणीयोपनिषद्वाक्यं लयविशेषरूपतां विधत्त इत्यभ्युपगमात्। उपपादितञ्चेदंपूर्वमेव। तस्मादस्यप्रकरणस्यनिर्विशेषपरत्वं पुच्छब्रह्मणस्स्वप्रधानत्वादिकञ्चाऽऽशामोदकएवेति सिद्धम्।

यदप्यधिकरणसंशयाकारप्रदर्शनम्; तदपि न; अन्नमयादिपर्याय- चतुष्टये पक्षित्वेन निरूपितस्यावयवित्वेनप्राधान्यस्य पुच्छत्वेननिरूपित- स्यावयवत्वेनाप्राधान्यस्य च मनसिगाढलग्नतया तद्बाधकादर्शनेन तदविरोधेनैव- संशयस्यप्रदर्शनीयतया निरुक्तसंशयोदयानवकाशात्, अस्यसंशयस्याभ्यास- हेतुनानिवर्तयितुमशक्यत्वाच्च। अभ्यस्यमानत्वरूपहेतोरन्नमयादौ ब्रह्मदृष्ट्यो- पासनविधायके वाक्ये पि सत्त्वात्, भूमविद्यायां निर्विशेषप्रकरणमध्यएव 'सयोनामब्रह्मेत्युपास्त' इत्येवंनामाद्युपासनविधाना त्तत्राभ्यस्यमानत्वरूपहेतु-

सद्भावात्, तत्र च प्राधान्येनप्रतिपाद्यत्वरूपमाध्याभावाद्धेतोर्व्यभिचरितत्वात्। एवञ्चोभयथादर्शनादस्यसंशयोत्पादकत्वमेवस्यान्ननिवर्तकत्व मित्यन्यादृशएवा-धिकरणसंशयो वक्तव्य इति। अत्राभ्यासपदस्याभ्यासावगतप्राधान्यकब्रह्म-प्रत्यभिज्ञानपरतायाः, विलक्षणसाध्यवाचकपदाध्याहारस्य तादृश्याआनन्दमय-पदलक्षणायाश्चायुक्तत्वात्सूत्रार्थवर्णनमपि श्रोतृश्रवणारुन्तुदम्। यदपि हेतोः प्राधान्यसाधन एव स्वारस्य मिति; तदपि न। किमिदं प्राधान्यं वस्तुतउत्कृष्टत्वम्, अथवा प्रकृतेनन्तरोविवक्षितत्वम्? नाद्यः: 'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषुवसतिं रामगिर्याश्रमे' ष्वित्यत्र यक्षस्य संदेशेऽभ्यस्यमानस्य रामाद्यपेक्षया प्राधान्याभावात्, राजसेवकादि-मात्रमधिकृत्यप्रवृत्तेग्रन्थे 'एषविक्रान्तसामन्तपूज्यभूपालसेवकः' इत्यादौ सेवकस्याभ्यस्यमानस्यापिभूपालाद्यपेक्षयाप्राधान्याभावाच्च: उपक्रमादीनांकस्मि-श्चित्तात्पर्यनिर्णायकत्वस्यैव न्यायवित्संमतत्वात्तात्पर्यविषयतायाअप्राधान्येपि-संभवात्। नान्त्यः, अन्नमयाद्युपासनाविधिष्विव नामाद्युपासनाविधिष्विव च पुच्छवाक्य आनन्दमयशेषत्वेनाप्रधानतयाब्रह्मप्रतिपादनेपि प्रकरणस्यब्रह्मणि-तात्पर्यसंभवेना स्यहेतोःपुच्छवाक्येपिप्राधान्येनान्दमयाशेषत्वेनैवब्रह्मविवक्षा-साधकत्वासंभवस्यो क्तत्वात्। अभ्यासपर्यन्तधावनस्यास्मन्मतेवैयर्थ्यशङ्कापि तत्रतत्र सिषाधयिषितसाधकहेत्वन्तरसद्भावेन तत्संग्रहणाय तल्लिङ्गान्नाशब्दम् दहरस्तल्लिङ्गादित्यादिरीत्या किमिति न सूत्रित मिति प्रतिबन्दीपराहता। अपिच जीवानन्दवैलक्षण्यस्यापि ग्रहणायैव तद्भावन मित्यस्मत्सिद्धान्तः। निरतिशयदशाशिरस्कत्वेनाभ्यस्यमानानन्दवत्त्वरूपहेतोरपि तेन क्रोडीकरणा-ङ्गीकारात्। अन्यच्च वक्ष्यते।

**विकार—प्राचुर्यात्।** यदुक्तमत्रपर्याये पुच्छपदस्यार्थभेदेपीन्द्रियेभ्य इत्यत्रेव प्रायपाठनिर्वाहस्संभवतीति; तन्न; तत्र प्रकरणे सर्वस्यापिपर-

शब्दस्योत्कृष्टवाचकत्वेन भिन्नभिन्नार्थकत्वाभावात् । उत्कर्षप्रयोजकाकारास्तु यथासंभवं भिद्यन्त इत्यन्यत् । तथाच तेन प्रकृतसाधन मसंबद्धमेव । परशब्दश्श्रेष्ठवचन इत्यानुमानिकाधिकरणे भामत्यपि । मनआदावर्थादिकारण-त्वाभावाद स्मिन्प्रकरणे परशब्दश्श्रेष्ठवचन इति कल्पतरुः । अनेन सर्वस्याप्यत्रत्यपरशब्दस्यैकार्थ्यं स्पष्टमुक्तंभवति । अत्रोपनिषद्व्याख्यानावसरेपि परशब्दानामेकार्थ्यमेवाङ्गीकृतं भवत्कूटस्थैः । किंबहुना भवतैवानुमानिकाधि-करणे 'परशब्देनह्युत्कर्षमात्रंप्रतिपाद्यते । तत्र प्रयोजकं यथासंभवं कल्प्यत इति न वैरूप्य' मित्यैकार्थ्यमेव प्रदर्शित मिति तत्रैवंव्याख्यायात्र "—परत्वंपूर्वपूर्वमपेक्ष्यानुमानिकाधिकरणेवक्ष्यमाणयारीत्यान्यदेवे "तिकथनं व्या-हतम् । नन्वव्यक्तान्तविषयस्यतस्यैकार्थ्यम् । पुरुषविषयकस्य ततोभिन्नार्थकत्व मितिचेन्न; तथापि पूर्वोक्तभाष्यभामत्यादिविरोधस्यापरिहृतत्वात् "सूक्ष्मा-महान्तःप्रत्यगात्मभूताश्च—सूक्ष्मतरंमहत्प्रत्यगात्मभूतंच—सूक्ष्मतरामहत्तरा —प्रत्यगात्मभूताच" इत्येवमधस्तात्परशब्दविवरणं विधाय तदेकरूप्येणैव "पुरुषविधएव—परस्सूक्ष्मतमोमहांश्चे "ति कठवल्ल्यां भाषणाच्च । तस्मादिन्द्रियेभ्यइत्यत्रपरशब्दानां भिन्नार्थकत्ववर्णनं स्वपूर्वग्रन्थविरुद्ध मिति-स्थितम् । यदपि गार्गिब्राह्मणोपादानम्, तदपि मन्दम्ः तत्रौतप्रोतशब्दाभ्यां त्रैकाल्यवर्तिसर्वविकारजाताकाशैतदुभयानुगतस्य प्रतिष्ठितत्वरूपार्थस्यैव लक्षण-या प्रतिपादनाभ्युपगमेना र्थवैरूप्याभावात् । मुख्यार्थत्वं दीधितिर्यक्तन्त्वारब्ध-पटविषय एवेति नात्र तत्संभवः । तथाचभवत्कूटस्थोक्तिः, "विकार-जातस्यधरणा "दिति । "आकाशएवतदोतंचप्रोतंचेत्याकाशेप्रतिष्ठितत्वमुक्त्वे " तिच । "अम्बरान्तधृतेरित्यनेन कथं प्रधानं निराक्रियत" इति भामती । "अम्बरान्तधृतेः प्रधानं निराकर्तुं न शक्यं साधारणत्वादित्यर्थ "इति

तत्कल्पतरुः । अनेन विकाराधारत्वमात्रमेवाक्षरे तेन वाक्येन बोध्यत इति स्पष्टमुक्तंभवति, अन्यथा तस्य प्रधानसाधारणत्वोक्तेरयोगात् । इत्थञ्चाक्षर आकाशस्यौतत्वप्रोतत्वोक्ति राधेयत्वपरैवेति तुल्यन्यायेन कैमुतिकन्यायेन वा विकारजातस्यापि सा तादृश्येवेति ऐकार्थ्यमेवतयोश्शब्दयोस्सिद्ध्यति । नन्वक्षराधिकरणे **परिमले** "अम्बरान्तधृते र्हेतूकरणं सूत्रे न युज्यते । अत्रत्यौतप्रोतशब्दयोःपूर्वानुरोधेनैकदेशार्थकत्वस्यैवाङ्गीकार्यतया ऽऽधारपरत्वायोगात् । पूर्वमन्तरिक्षलोकाः कस्मिन्नोताश्चप्रोताश्चे त्यादौ पूर्वपूर्वलोकस्य तत्तदूर्ध्ववर्तिलोक ओतत्वप्रोतत्वोक्ते रुपरितनलोकानां स्वाधस्तनलोकाधारत्वासंभवेन तन्तूनां पट ओतत्वप्रोतत्वोक्तेरिवाधोलोकानामूर्ध्वलोकैकदेशताभिप्रायता हि निर्णीयत" इत्याशङ्क्य "ओतम्मनस्सहप्राणैश्चसर्वैः, मयिसर्वमिदंप्रोत मित्यादिष्वोतप्रोतशब्दयोराधेयपरत्वस्यैववक्तव्यतयाऽत्रापि तयोस्तत्परत्वमेवाश्रयितुंयुक्तम् । पृथिव्यपेक्षयोर्ध्ववर्तिपर्वतानांपृथिवीधारकत्वस्येवोर्ध्वलोकानामधस्तनलोकधारकत्वस्य प्रमाणबला दभ्युपगमे, न बाधकलेशः" इति प्रथमं समाधायानन्तरं तत्रारुच्या "श्रूयमाणौतप्रोतपदानांयथाकथञ्चिन्नयनेपि अक्षरेसर्वमोतंचप्रोतञ्चेत्यत्रैव प्रकरणतात्पर्यावसाया त्तत्रतयोःपूर्वोक्तप्रमाणानुसारेणाधेयत्वपरत्वसंभवा" दिति स्वाभिमतं समाधान मुक्तम् । दृष्टान्तीकृतंचात्रविषये इन्द्रियेभ्यइत्यादिवाक्यम् । इत्थञ्चस्थलद्वयेऽपिभिन्नभिन्नार्थकत्वमेव युक्त्युपन्यासपूर्वकं तत्राश्रितमिति नास्माकमेतद्दृष्टान्तद्वयोपादानमसांगत्यमर्हतीति चेन्न । तत्रोक्तसमाधानद्वये पूर्वस्य युक्तियुक्ततया परस्य तद्विहीनतया च तयोः क्रमेणारुच्यभिमतिविषयतयो र्वर्णनायोगात्, प्रत्युत व्यत्यासस्यैवाश्रयणीयत्वात् । तथाहि पूर्वमन्तरिक्षलोकाःकस्मिन्नोताश्चप्रोताश्चेत्यादावोतप्रोतशब्दयोरेकदेशपरत्वमस्वरसम्, आधेयपरत्वं च स्वरसम्,

यस्ययस्मिन्नोतत्वंप्रोतत्वंचोच्यते तस्यतदधीनस्थितिकत्वं हि स्वरसतः प्रतीयते । गन्धर्वलोकेष्वित्यादिमतस्यस्वारस्यं च. अयंतस्यैकदेश इति- व्यवहारात्षष्ठ्याएवयुक्तत्वात् , अनुसंधीयमानेष्वित्यध्याहारे स एव दोषः । एकदेशत्वंचेदं न मुख्यम् । अपिच श्रूयमाणौतप्रोतशब्दयोरन्यादृशार्थकत्वे तद्घटिततत्तत्प्रश्नोत्तरवाक्यपरम्पराधीनकल्पनीयताके तात्पर्यविषयतयाभिमते सर्वजगदक्षरओतंचप्रोतंचेत्यस्मिन्वाक्ये तयोराधेयपरत्ववर्णनं सर्वात्मना न संभवति । तादृशवाक्यार्थस्य श्रूयमाणबहुवाक्यार्थफलितत्वस्यैवाङ्गीकार्यतया श्रूयमाणस्य यदर्थकत्वं तदर्थकतायाः कल्प्यमानस्यापरिहार्यत्वेन भिन्नभिन्नार्थ- वर्णनायोगात् । श्रूयमाणवाक्येषुचोत्तरोत्तरप्रश्नवाक्यस्थस्यपूर्वपूर्वोत्तरवाक्यस्थ- समानार्थकत्वमावश्यकम् ः अन्यथा प्रश्नासामञ्जस्यात् । एवञ्च तदुत्तरवाक्यस्थ- स्यापि तदर्थकत्वमवर्जनीयमिति । श्रुतिश्च द्यावापृथिव्यौ विधृते तिष्ठत इति धृतिमोतप्रोतशब्दार्थं दर्शयति । यत्तु न्यायरक्षामणौ तत्र "आध्या- नाधिकरणे इन्द्रियेभ्यः परा इत्यत्रार्थादिपरत्वं न प्रतिपाद्यम् । अपित्ववाक्य- भेदाय सर्वेभ्यः पुरुषपरत्वमेवेत्युक्तम् । तन्न्यायेनात्राप्यन्तरिक्षलोकादीनां- गन्धर्वलोकादिष्वोतप्रोतत्वेश्रुतेस्तात्पर्यं नास्ति, अपित्वक्षरे सर्वस्योतप्रोतत्व एवे"ति ः तत्रेदंवक्तव्यम् । आध्यानाधिकरणे हि भवन्मते अर्थादीनामिन्द्रि- यादिपरत्वप्रतिपादनेन भिन्नभिन्नोपासनापरत्वं वाक्यस्य नास्ति ः तथासति वाक्यभेदादित्युक्तम् । तावतार्थादिगतपरत्वस्य नापलापः क्रियते । किन्तु तत्र मुख्यतात्पर्यं पृथग्ध्यानोपयोगितया नास्तीत्येतावदुच्यते । तथाच भामती. "इन्द्रियेभ्य.पराह्यर्थाइत्येष ताव त्संदर्भो वस्तुतत्त्वप्रतिपादनपरः प्रतीयते नाध्यानपरः, तदश्रुते" रिति । एवञ्चान्तरिक्षलोकादेर्गन्धर्वलोका- दावोतप्रोतत्ववचनस्यान्यशेषत्वेनस्वयंप्रधानार्थत्वाभावेपि अप्रधानतयावापि-

प्रतिपाद्यमोनप्रोनत्वमेकरूपंवस्तुमदङ्गीकर्तव्यमिति न नस्य प्रधाननात्पर्याभावमात्रेणापलापश्शक्यवचनः । ततश्चावश्याङ्गीकर्तव्यं श्रुतिसूत्रयुक्त्यनुगुणं धृतिरूप मेवेति । इत्थंच तुष्यत्वित्यादिन्यायेनैवोत्तरसमाधानावतार इति ग्रन्थकृदभिमतमिति भवतस्तदुभयदृष्टान्तीकरणमसंबद्धमेवेति । इदमप्यवधेयम् वस्तुमदर्थप्रतिपादनपरेषु वाक्येषु समानशब्दनिर्देश्यानामर्थानां सत्यपि- यत्रक्वचिद्भिन्नत्वे प्रकृते पूर्वं कोशेषु अपुच्छेष्वेवपुच्छत्वकल्पना, नतु वास्तवपुच्छकथन मिति तदनुरोधेनात्राप्यवैषम्येण पुच्छत्वकल्पनामेव स्वरम। मङ्गीकृत्य सर्वसामञ्जस्ये यत्किञ्चिद्दृष्टान्ताभासेनान्यथाकरणमशक्यमिति ।

यदप्युक्तं नकेवलंप्रायपाठनिर्वहणायैवपुच्छपदप्रयोगः, अपितु शङ्काविशेषनिवृत्तयेपीत्यादि ; तदप्यसाधु । अत्र भवदभिहितायाः पद्धते र्बहुप्रमाणविरुद्धतया प्रामाणिकैस्सुदूरपरिहरणीयत्वात् । नच ब्रह्मगतानन्त्यस्य वस्तुपरिच्छेदराहित्यात्मकस्य वस्त्वन्तरशून्यत्वरूपत्वे जडवर्गस्यब्रह्मविवर्तत्वे तस्यसृष्टिवाक्यात्प्रतीयमानत्वे ब्रह्मविदितिवाक्यस्यकण्ठगतचामीकरन्यायेनप्राप्तस्याप्राप्तत्वभ्रमापोहकत्वे कोशविशिष्टचैतन्यस्यजीवत्वे ब्रह्मणस्तद्विशेष्यरूपत्वे आधेयान्तर्गतस्याप्याधारत्वोपपादनायाधारवाचकपदोपेक्षापूर्वकपुच्छपदप्रयोगइत्यस्मिन्नंशे च स्वारस्यं वानन्यथासिद्धप्रमाणंवा तदविरोधंवा युक्तिवा भवदीयपूर्वोक्तिंवा क्वचिदुपलभामहे । तथाहि प्रत्यक्षादिप्रमाणावगतबहुविधविजातीयस्वगतभेदबोधनेदम्परतायाः परस्सहस्रश्रुतिवाक्येषूपलम्भेन कयापिविधया तदपलापासंभवेन वस्तुपरिच्छेदस्य वस्त्वन्तरविशिष्टत्वरूपत्वं तद्राहित्यस्यवस्त्वन्तरशून्यत्वरूपत्वं च न प्रतिज्ञातुं शक्यम् । “नेहनानास्तिकिञ्चन, मृत्योस्समृत्युमाप्नोतियइहनानेवपश्यति, तत्त्वमसि, योसौसोहम्, सर्वंखल्विदंब्रह्मे”त्यादिवाक्यान्यवलम्ब्य

खलु वस्त्वन्तराभाव इष्यते । स सर्वात्मना न संभवमर्हति । "सोकामयत-बहुस्याम्, तदैक्षतबहुस्याम्, तन्मनोकुरुतस्यामिति. तन्नामरूपाभ्यांव्याक्रियत, तदात्मानंस्वयमकुरुत. तदनुप्रविश्यसच्चत्यच्चाभवत्, यस्यात्माशरीरम्, यस्य-पृथिवीशरीरम् —एषसर्वभूतान्तरात्मा" इत्यादिप्रमाणगणैश्चेतनाचेतनात्मकप्रप-ञ्चस्यविशिष्टब्रह्मकार्यत्वेन ब्रह्मरूपतया निष्कृष्टब्रह्मशरीरत्वेन ब्रह्मान्तर्यामि-कतया च सत्त्वावगमान्निषेधस्यविहितव्यतिरिक्तविषयतायान्यायविद्भिरङ्गी-कृतत्वेन पूर्वोक्तनिषेधवाक्यानां ब्रह्मकार्यत्वब्रह्मान्तर्यामिकत्वरहितकेवल-प्रपञ्चविषयत्वस्यावश्यकत्वात् । नहि लोके एतन्नगरवर्तिनोराजभक्ता इति वाक्ये जाग्रति. न कोप्यस्मिन्नगरेस्तीति प्रयुज्यमानस्यवाक्यस्य पुरुषसामान्य-शून्यत्वपरतांचेतयमान प्रतिजानीते । राजभक्तिरहितो न कोप्यत्रेति स प्रत्येति । एवं ब्रह्मप्रपञ्चयोरशरीरात्मभावस्य प्रमाणसिद्धत्वे शरीरवाचिनां च शब्दानां शरीरिपर्यन्ततया शरीरिवाचकशब्दसामानाधिकरण्यस्य देवोहं-स्थूलोनील कृशइत्याद्यबाधितदेहात्मविवेकवत्कर्तृकव्यवहारसिद्धत्वे च सति तत्त्वमसीत्यादौ प्रकारान्तरेण सामानाधिकरण्यवर्णनं न विद्वदभिनन्दनमर्हति । जातिगुणशब्देष्वेषैवहिगतिराश्रीयते । अपृथक्सिद्धविशेषणवाचिनां विशेष्य-पर्यन्तते तिसर्वानुगमः । उपबृंहणानुरोधादप्युक्तयोर्निषेधाभेदवाक्ययोरुक्तार्थ-कत्वमेवाश्रयणीयम् । "अहमात्मागुडाकेश सर्वभूताशयस्थित" इत्यारभ्य आदित्यानामहंविष्णुः. नतदस्तिविनायत्स्यान्मयाभूतंचराचरम्, सर्वसमाप्नोषि-ततोसिसर्व. इति, सर्वगत्वादनन्तस्यसएवाहमवस्थित इत्येवं च हि स्मर्यते । तत्र मयाविनाभूतं मदन्तर्यामिकत्वरहितं च यत्स्या तन्नास्ती त्यर्थः । मयिसर्वमिदंप्रोतमित्याद्यैकार्थ्याच्च । यतस्सर्ववस्तुजातमात्मतयाव्याप्नोषि, तत-स्सर्वोसि सर्ववस्तुजातरूपोसि, तत्तद्वाचकशब्दवाच्योसी तिसर्वमित्यादेरर्थः ।

अतएव मत्तोन्यन्नेत्यनुक्त्या, मयाविनाभूतंनेत्युक्त्या चोक्तएवार्थः । एवं त्वद्व्यतिरिक्ताभावात्त्वमेवसर्वमित्यनुक्त्या सर्वव्याप्तत्वात्सर्वइत्युक्त्या चोक्त-एवार्थस्सर्वमित्यादेः । एवं योसावसौसोहमस्मि, तद्योसौसोह मित्याद्युपासना-प्रतिपादकवाक्येषूपास्योपासकयोः प्रतीयमानं सामानाधिकरण्यं शरीरात्म-भावनिबन्धनं, नैक्यनिबन्धनं नवावाधार्थ मिति, 'अथयोन्यांदेवतामुपास्ते-अन्योसावन्योहमस्मीति, न स वेद, अकृत्स्नोह्येष आत्मेत्येवोपासीते' तिवचनान्तरा दवगम्यते । अस्यार्थः यउपासक स्स्वात्मनोन्यां शरीरादात्मान-मिवभिन्ना मुपास्यां परां देवतां, असौदेवता मत्तोन्या मदपेक्षयाऽत्यन्तभिन्ना, अहमप्यस्यादेवतायाअत्यन्तभिन्न इतिमत्वेन्द्रादिदेवतामिवशरीरात्मभावमनन्त-र्भाव्योपास्ते, स तत्स्वरूपं न वेद न ज्ञातवा निति । कुतएतदित्य त्राहअकृत्स्न इति । हिं यस्मा देष उपासकात्मा अकृत्स्नोऽपूर्णः, अपृथक्-सिद्धविशेषणमात्ररूपत्वात् । विशिष्टं हि पूर्णम् । लोकेपि न जातिगुण-क्रियामात्रस्य पूर्णता कार्यकरता वा । अपितु तद्विशिष्टस्य द्रव्यस्यैव तदुभयम् । तद्व दितिभावः । तथाच स्वात्मशरीरकपरमात्मनःपूर्णत्वा त्पूर्णोपासनस्यैवफलसाधनतया शरीरात्मभावसंबन्धमन्तर्भाव्यैवोपासनंकर्तव्य महंब्रह्मास्मी ति, नस्वात्मनस्स्वनिष्ठत्वात्मकपृथक्सिद्धत्वगन्धोप्याघ्रातव्यः । तथासत्युपासनस्यायथावस्थितज्ञानरूपत्वेन मोक्षसाधनत्वाभावप्रसंगा दिति तात्पर्यम् । नचवाच्यमिदंवाक्यमैक्योपासनमेवविदधातीति ; तथासत्य-न्यामित्यकृत्स्नइतिचोपक्रमोपसंहारयोरनन्वयप्रसंगात् । अन्यामित्युक्त्या शरीरादात्मनइव तस्माद्देवतायास्सुस्पष्टंभेदावगमात् । उपासकात्मनो-ऽकृत्स्नइत्यपूर्णत्वोक्त्या तस्य विशिष्टैकदेशत्वबोधनेन गुण्याद्येकदेशभूत-गुणादीनां धर्मिण इव देवतापेक्षया तस्य भेदावगमाच्च । नचशङ्क्यमन्यो-

सावन्योहमस्मीतिदेवतामन्यां यं उपास्ते इत्यन्वय इति प्रथमश्रुतान्यत्वस्या-स्वरसतयानयनायोगात् । आत्मेत्येवोपासीतेत्युपसंहाराच्च । आत्मशब्दस्य-शरीरप्रतिसंबन्धिन्येव प्रसिद्धेः । शरीरादात्मान्यइत्यत्रेवात्रान्यशब्दोपि नास्वरसः । देवतामन्यामुपास्तइत्यनुक्त्या अन्यांदेवतामेवमुपास्तइत्युक्त्यात्रैक-विधमन्यत्वंवस्तुतोविद्यमाने मन्यच्चप्रतिषिध्यमान मितिव्यक्तम् । तत्र शास्त्रसिद्धं शरीरात्मभावरूपमन्यत्वं स्वीक्रियते । तादृशशरीरात्मभावश्रुत्य-परामर्शमूलमिन्द्रादेरिवपरस्याअपिदेवतायाअत्यन्तभिन्नत्वं प्रसक्तं प्रतिषिध्यते । अतश्च यद्यपि भिन्नैव परादेवता, अथापि नेन्द्रादिवदत्यन्तभिन्नेति हि श्रुत्यभिप्रायोवगम्यते वचनशैलीविशेषात् । श्रुत्यन्तरंच जुष्टंयदापश्यत्वन्यमीश मित्यन्यमेवोपास्यंदर्शयति । अपिच देवतापदनिर्देशादुपासीतेत्युक्त्याचेदंवाक्यं न ब्रह्मात्मैक्यपरं वर्णयितुं युक्तम् । इत्थञ्चेदंवाक्यंमोक्षोपासनप्रकरणगत-वाक्यस्थोपास्योपासकवाचकशब्दसामानाधिकरण्यं शरीरात्मभावनिबन्धनमेवेति-बोधयतीति चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मकार्यत्वेनतदन्तर्यामिकत्वेनच-प्रमाणसिद्धताया दुर्निरोधत्वेन निषेधवचसामतथाभूतप्रपञ्चविषयकत्वावश्य-म्भावेन ब्रह्मणस्सद्वितीयत्वस्यानिर्बाधतया भवदुक्तरूपंतदानन्त्यं न संभवती त्यन्यादृशमेवतद्वक्तव्यम्, उक्तं च तदस्मत्पूर्वैर्न्यायविदग्रेसरै रिति ।

यदप्युक्तं जडवर्गोब्रह्मविवर्त इति, तदपि स्वगोष्ठीमात्रहृदयङ्गमपरि-भाषामात्रम् । नह्यात्मनआकाशस्संभूतइत्याद्युक्तौ रजतस्यशुक्तिविवर्तत्वमिवा काशादीनामात्मविवर्तत्वं प्रतीयत इति, शुक्तिकादेरजतविवर्तोपादानत्वम-सिद्धमिति चप्रागेवोक्तत्वात् । अपिच विवर्तोपादानत्वाभ्युपगमे आत्मनआकाश इत्यादौ पञ्चमी दुर्घटा । आकाशादे र्मिथ्यात्वेन घटादेरिवजनिकर्तृत्वासंभवेन मिथ्याभूतं प्रति सत्यस्य हेतुत्वासंभवेन च जनिकर्तुःप्रकृति रितिस्मृतेः

प्रवृत्त्ययोगेनापादानसंज्ञादौर्लभ्यात् । लौकिकजनापेक्षयासत्यत्वेनप्रसिद्धोभयविषये मृत्तिकायाघटोजायत इत्यादौ शास्त्रचारितार्थ्येनान्यतरमिथ्यात्वेतत्प्रवृत्तेर्दुरुपपादत्वात् । प्रसिद्धमेव शीघ्रं बुद्धि मधिरोहती ति हि न्यायविदः। अतएव शुक्तेरजतंसंभूतमिति न व्यवहारः। एवं हेतुत्वासंभवादेव हेतौपञ्चम्यपि न सुलभेति।

जीवब्रह्मणोरैक्यमपि श्रुतिशतबाधितम् । एकस्यैव शुद्धचैतन्यात्मकब्रह्मणोनाद्यविद्यासंबन्धेनजीवत्वे युगपदात्मद्वयसद्भावबोधकानां, "ज्ञाज्ञौद्वौ, समानेवृक्षे, ऋतंपिबन्तौ, द्वासुपर्णा, गुहांप्रविष्टावात्मानौ"इत्यादिवाक्यानामसाङ्गत्यप्रसंगात् । नहि लोक एकमेवदेवदत्तं बाल्येरोगरहितं वार्धकेतद्वन्तमभिप्रेत्य देवदत्तरुग्णदेवदत्तौ इति, बाल्यावस्थाकृतसद्धर्महेतुत्वमभिप्रेत्य रुग्णदेवदत्तो देवदत्तकृतसद्धर्माद्रोगान्मुच्यत इति च व्यवहारो दृश्यते। तिष्ठन्तु तावत् परस्सहस्राणि भेदपराणि वचांसि। इदमेकमेव तटस्थै र्विद्वद्भि रवेक्षणीयम् , "तद्यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् , एवमेवायंपुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर" मिति सुषुप्तमधिकृत्य श्रूयते। अत्र सुषुप्तौ पुरुषपदवाच्यस्य जीवात्मनः प्राज्ञेनपरमात्मना परिष्वङ्ग स्तन्निबन्धनोबाह्यान्तरविषयकज्ञानाभाव श्चोच्यत इति संप्रतिपन्नम्। अत्रैकदैवपरिष्वञ्जकस्यप्राज्ञत्वं परिष्वज्यमानस्यज्ञानशून्यत्वं च श्रूयमाण मुभयोः परस्परविरुद्धधर्मवत्त्वेन स्वाभाविकंभेदमवगमयतीतिप्रत्येतव्यम्। नेदंवचनमन्यथानेतुंशक्यम् ; एकदैव सर्वज्ञत्वाज्ञत्वयो र्वस्त्वैक्ये सति कथमपि नयनासंभवात् । तद्यथाप्रिययेतिदृष्टान्तस्वारस्यादपि स्वाभाविको भेद एव जीवेश्वरयोरुक्त इतिप्रतीयते। जीवब्रह्मणोस्वाभाविकभेदबोधकानन्यथासिद्धश्रुतिवाक्येष्विदमपिप्रधानतम मितिमत्वैव सूत्रकारो जीवातिरिक्तः

परमात्मा नाम्ती तिप्रासंगिकदशायां सुषुप्त्युत्क्रान्त्योर्भेदेनेति तत्सद्भावं स्थापितवान् । उत्क्रान्तिवाक्यमप्येतादृश मितितस्याप्युपादानं सूत्रे । सूत्रस्यास्य जीवपरभेदपरत्वं परेषामप्यभिमतम् । तत्रतत्र कमप्युपायमवष्टभ्य प्रतीयमानभेदनिषेधदीयमानदृष्टिभिरपि भवद्भाष्यकारै रत्रोपात्तश्रुतिसूत्रविषये सर्वात्मना तदशक्यतां मन्वानै रेवंह्यभाषि, "सुषुप्तावुत्क्रान्तौचशारीराद्भेदेन-परमेश्वरस्यव्यपदेशा" दिति, "तस्मात्सुषुप्त्युत्क्रान्त्यो र्भेदेनव्यपदेशा त्परमेश्वरएवात्रविवक्षित इतिगम्यत" इति च । "नतावत्संसार्यतिरिक्तस्या-भावः, तत्प्रतिपादका हि शतश आगमाः ईक्षतेर्नाशब्दम्, गतिसामान्यादि-त्यादिभि स्सूत्रसंदर्भै रुपपादिताः । नचात्रापि संसार्यतिरिक्तसंकीर्तनाभावः, सुषुप्त्युत्क्रान्त्यो स्तत्संकीर्तनात । नच प्राज्ञस्य परमात्मनो जीवाद्भेदेनसंकीर्तनं सतिसंभवे राहोश्शिर इतिवदौपचारिकं युक्तम् । नच प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि निरूढवृत्तिः कथञ्चि दज्ञविषयो व्याख्यातु मुचितः । नच प्रज्ञाप्रकर्षोसंकुचितवृत्ति र्विदितसमस्तवेदितव्यात्सर्वविदो न्यत्र संभवति । नचेत्थंभूतोजीवात्मा" इति भामतीकारः । भेदापलापमहायज्ञदीक्षितो दीक्षितोपि प्राह "नहि लाघवमात्रलोभेन सर्वज्ञं सर्वशक्तिकमनादिसकल-प्रपञ्चप्रवाहस्रष्टारं सकलजीवजडविलक्षणमेकमीश्वरंप्रतिपादयता मेतावता मौपनिषदवाक्याना मन्यथानयनं युक्त मिति प्रथमविकल्पदूषणाभिप्राय" इति । प्रथम मेवंवदतामपि भाष्यभामतीपरिमलकाराणां स्वाभिमतसिद्धान्त-परिरक्षणाय यद न्ततःकांचिदद्भुतांपरिपाटीमाश्रित्य सुषुप्तिसूत्रविषय-वाक्यस्य जीवेश्वराभेदपरत्ववर्णनं विकल्पविशेषपदर्शनं तदुत्तरत्वेनक्रमेण-सूत्रद्वयप्रवृत्तिकथन मित्येवमादिश्रद्धासाम्राज्यं तदपि परिच्छेदान्तरे विस्तरे-णानूद्यदूषयिष्यते । *अत्रपुन स्तेषा मार्जवेनप्रथमंसूत्रश्रुतिस्वारस्यपातिन्या

बुद्धया ऽभावी त्येतावदुक्तम् । इत्थंचाभ्यांश्रुतिवाक्यसूत्राभ्यां जीवेश्वर-भेदस्वाभाविकस्सिद्ध इति तदपलापस्यदुष्करतया नतदैक्यवर्णनप्रत्याशासंभव इति । एवं योवेदेतिवाक्यस्यैक्यपरत्ववर्णनमपि साहस मित्युक्तम् । ब्रह्मविदित्युपक्रमवाक्यस्याप्राप्तत्वभ्रमापोहकत्ववचनमपि श्रद्धाविजृम्भित मितिमध्यस्थमनोवेद्यम् । सर्वपदस्वारस्यविघातात्, अर्चिरादिमार्गश्रवणेना-पुनरावृत्तिश्रवणेनच देशविशेषवृत्तिप्रामाणिकसर्वाकारविशिष्टविग्रहविशेषा-वच्छिन्नब्रह्मप्राप्तेरेवमोक्षरूपतायाः तस्याएवब्रह्मोपासनसाध्यतायाश्चा भ्युप-गन्तव्यत्वेन स्वरसार्थग्रहणे बाधकलेशाभावाच्च । परमेव्योमन्नित्यनेन तत्सूचन मित्यपि बाधितम् । सत्यंज्ञानं, सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिते तिविविधभेदविस्पष्टबोधनेनाप्नोतेर्भवत्यर्थकत्वप्रतिबंधकताया एव दर्शनात् । चैतन्यात्मकब्रह्मणएव कोशविशिष्टत्वे जीवत्व मित्यपिहास्यम् । जीवब्रह्मणो-स्स्वाभाविकभेदस्य तयोर्नित्यचैतन्याश्रयत्वस्य जीवस्यानादिकर्मप्रवाहेणान्न-मयादिशब्दितदेहादिसंबंधस्यचा नन्यथासिद्धबहुप्रमाणसिद्धत्वेनैतद्विरुद्धार्थस्य स्वकपोलकल्पितस्य प्रामाणिकग्राह्यत्वासंभवात् । किञ्च कोशविशिष्टस्य जीवत्वे तस्य गुहांप्रविष्टावितिमन्त्रे गुहाप्रवेशोक्तिरसंगतास्यात् । बाह्यान्न-मयादिकोशविशिष्टस्यान्तरगुहाप्रवेशायोगात् । एवं योयंविज्ञानमयःप्राणेषु-हृद्यन्तर्ज्योति रित्यादावपि बोध्यम् । किमन्यत्र, 'तस्यैव ब्रह्मणो गुहानिहितत्वं जीवरूपेणोक्त' मिति त्वदीयवाक्यमपि न संगच्छेत, जीवपदस्य विशिष्टपरत्वे गुहानिधानासम्भवस्योक्तत्वात् विशेष्यमात्रपरत्वे ब्रह्मणस्स्वेन-रूपेणैवनिधानसिद्ध्या जीवरूपेण तत्संपादनासंभवात् जीवपदस्य चैतन्या-त्मकविशेष्यमात्रपरताया अनभिमतत्वाच्च । कोशरूपविशेषणमात्रपरत्वेऽपिच सुतरामसंभवः । अपिच रूपवत्येकस्मिन्घटे रूपवद्घटात्मकविशिष्टतदन्तर्गत-

विशेष्यभूतघटभेदाभिप्रायेणा त्रभूतले घटरूपवद्धटौ स्त इत्यादिव्यवहारा-दर्शनेन ऋतंपिबन्तौ गुहांप्रविष्ठावात्माना वित्यादिश्रौतसौत्रनिर्देशासांगत्यमपि दुर्वारम् । अतएव ब्रह्मणो जीवैकदेशत्वोक्तिरपि दत्तोत्तरा ।

यदप्युक्तं स्वान्तर्गतस्य स्वाधारत्वसंभवसूचनाय पुच्छपदप्रयोग इति । तदपि न, नहि देवदत्तादिकंप्रत्यासन्नादिकस्यैव पक्षिणं प्रति पुच्छस्याधारत्वं प्रत्यक्षतो दृश्यते. कस्यापि पक्षिण स्वकीये पुच्छे उपवेशादर्शनात् । नच शब्दः प्रमाणं प्रत्यक्षविरुद्धमर्थं बोधयितुं प्रभवति । "तस्मात्सर्वाणिवयांसि पुच्छेनप्रतिनिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छ" मिति श्रुतावपि न पुच्छस्याधारत्वमुक्तमुपलभ्यते, वाचकपदाभावात् । प्रतिष्ठापदमपि नाधारवाचकं. पुच्छेनप्रतितिष्टन्तीत्यस्यानन्वयप्रसंगात् । पुच्छेनप्रतितिष्ठन्ति प्रतिष्ठायोत्पतनावसरेऽपि पुच्छेनैवोत्पतन्ती ति वचनव्यक्त्या पुच्छस्य वयोगतभूप्रदेशविशेषप्रतिष्ठानाकाशोत्पतनात्मकव्यापारहेतुभूतविलक्षणशक्ति - मत्वमेव प्रतीयते । उत्पतन्तीत्यस्य प्रतिनिर्देशरूपं प्रतितिष्ठन्तीत्येतत् नैश्चल्येनस्थितिपरम् । तथाचोपक्रमवाक्यानुसारात् प्रतिष्ठापुच्छमित्यत्र प्रतिष्ठापदं भूम्याद्याधारकप्रतिष्ठानोत्पतनहेतुशक्तिविशेषवत्परम् । अन्यथा-पुच्छेनप्रतिष्ठायेत्यन्वयेएवकारास्वारस्यं तद्वाक्यवैयर्थ्यञ्च । यद्यपि प्रतिष्ठा-पदमाधारपरमपिभवितुमर्हति. तथाप्यत्र विवरणवशात्करणव्युत्पत्तिरेवाश्रय-णीया अतोनेन न ब्रह्मण आधारत्वसिद्धिः । नन्वत्रकपिपुच्छमेव गृह्यते, कपयो हि कदाचि त्स्वपुच्छं कुण्डलीकृत्य तस्मिन्नुपविशंती ति चेन्न । अयं दक्षिणः पक्षः अयमुत्तरःपक्ष इत्यादिना तत्रतेत्र पक्षित्वरूपणस्यैव प्रतीत्या कपिपुच्छग्रहणायोगात् । किञ्चात्रैवं क्लिश्यतोऽपि तव नेष्टसिद्धिः, दृष्टान्तवैषम्यात् । नहि पुच्छविशिष्टपक्षिणं प्रति त्वद्रीत्यापि पुच्छस्याधारत्वं

संभवति । 'न ह्यत्यन्तेपटुरपि नट स्स्वस्कन्धमारुह्य नृत्यती' ति न्यायात् । तस्मात् पुच्छातिरिक्तावयवं प्रत्येव पुच्छस्याधारत्वं वक्तव्यम् । दार्ष्टान्तिके तु कोशविशिष्टचैतन्यस्यैव जीवत्वाभ्युपगमात् तंप्रति तदन्तर्गतचैतन्यस्याधारत्व मिष्यते, इदंचासंभवग्रस्त मिति । किञ्चात्र "अर्थभेदेऽपि शब्दैक्यमात्रेण साम्यस्य प्राचुर्यादितिपरिहारार्थ" इति व्याख्याय महताप्रयासेनोदाहरणद्वयप्रदर्शनं, "तन्निर्वृत्तिश्चानन्दमयस्य जीवस्य पक्षित्वकल्पनया ब्रह्मणश्च पुच्छत्वकल्पनया निर्वर्त्यत"इतिवचनं च परस्परव्याहतम् । पुच्छपदस्याधारपरत्वे ब्रह्मणि पुच्छत्वकल्पनासंपादनाऽयोगात्, तत्प्रत्याशायामत्रत्यपुच्छपदस्य पर्यायान्तरस्थसमानार्थकताया अनपायेनोदाहरणान्वेषणप्रयासवैफल्यात्, पूर्वं कृच्छ्रेण परिहृतस्याप्राधान्यस्य ब्रह्मणि पुनरुन्मेषप्रसंगाच्च । तस्मान्नकेवलमित्यारभ्योक्तं सर्वं स्वकपोलमूलं प्रमाणयुक्तिविधुरमुपेक्ष्यमितिसिद्धम् ।

**तद्धेतुव्यपदेशाच्च** । यदत्र सूत्रतात्पर्यवर्णनं तदत्यन्तहेयम् । सूत्र ईदृशार्थवर्णनानुगुणाक्षरशकलाभावात् । पुच्छपदस्याधारपरत्वप्राप्तं वैषम्यं सह्य मित्यत्र खलु सूत्रतात्पर्यम् । अस्य आनन्दमयनिरूपितकारणत्वस्यचक स्सम्बन्धः, एवं तात्पर्यवर्णने सर्वेषामपिसूत्राणां सर्वविधतात्पर्यवर्णनसम्भवेन गतं तत्तत्सूत्राणां तत्तदधिकरणसम्बन्धनियमेन । किञ्चानन्दमयोजीवः सच कोशविशिष्टचैतन्यात्मकः पुच्छंब्रह्म च तत्र विशेष्यस्वरूपं तदेकदेशभूतम् । आनन्दमयं प्रति ब्रह्मणः कारणत्वं च सूत्रोक्त मिति मन्यसे । एवंच तव मते कथं तन्निरूपितकारणत्वं तदेकदेशत्वं बाधेत । इत्थंचैतत्सूत्रभाष्यभामत्यादिग्रन्थ स्सर्वोऽपि तव प्रतिकूलस्संवृत्त इति बुद्ध्यस्व । तत्र सर्वत्र ब्रह्मण आनन्दमयकारणत्वेन तदनवयवत्वसमर्थनात् । त्वयाच

विलक्षणजीवस्वरूपनिष्कर्षणेन तत्कारणत्वतदवयवत्वयो रभ्युपगमात् । एवञ्च पर्यायान्तरेष्विवात्राप्येकदेशत्वाविघाता त्पुच्छत्वकल्पना न प्रतिषेधमर्हति । अस्मन्मनेचानन्दमयंप्रति कारणत्वमेव ब्रह्मणि ने तिध्येयम् ।

**मान्त्रवर्णिकमेव च गीयते** । यदत्राभिप्रायवर्णनं तदपि मन्दम् । साध्यार्थाभावेन सूत्रवैयर्थ्यात् । मन्त्रवर्णे ब्रह्मणस्स्वप्राधान्यावगमे ब्रह्म-पुच्छमित्यत्र ब्रह्मपदेन तस्यैव प्रत्यभिज्ञाने पुच्छपदस्य प्रधान्यविरोधित्वे च सति सुप्रसिद्धेनोपक्रमप्राबल्येन निष्प्रत्यूहं पुच्छपदान्यथानयनसिध्या सूत्रकृत्याभावात् । अन्यच्चोक्तमेव ।

**नेत—त्तेः** । यदत्र सावतरणं सूत्रार्थवर्णनं तदपि न । आनन्द-मयोपासनायाः प्रस्तावगन्धाभावेनाकाण्डउपास्य इत्यध्याहारस्यायुक्तत्वात् । पुच्छपदस्यैकस्याधारपरत्वाभ्युपगममात्रेण पक्षादीनां जागरूकत्वे निरंगत्व-शंकाया असुन्दरत्वाच्च । आनन्दमयोपासनविवक्षायाः प्रकरणावगतनिर्विशेष-ब्रह्मज्ञेयत्वाविरोधित्वेनैवंसूत्रार्थवर्णनायोगाच्च । नहि युष्माभिस्सगुणोपासन-परतयाप्रतीयमानवाक्यानां निर्गुणज्ञेयत्वतात्पर्यकता परित्यज्यते । निर्गुणे ज्ञेये वाक्यस्य तात्पर्यमुपवर्ण्य प्रतीयमानार्थस्य सर्वात्मना त्यागे मध्यस्थ-विद्वदपवाद मालोच्य कयाचिद्युक्त्या त्यागापरपर्यायमर्वाचीनसगुणब्रह्मो-पासनतत्प्राप्त्यादिविषयत्वं खलु तेषामुपवर्ण्यते, तद्वत्प्रकृतेप्युभयाभ्युपगमे को विरोधः । किंच नानुपपत्ते रित्येव सूत्रणमुचितं त्वत्पक्षे । अत्रोपासन-विवक्षानुपपत्ते रित्यर्थसंभवात् । इतरपदं तु व्यर्थमेव, आनन्दमयो नोपास्यः अपितु ब्रह्मैवोपास्य मित्यभ्युपगम एव तत्सार्थक्यसंभवात् । इतरपदस्यात्रा-नन्दमयातिरिक्तपरत्वमेव युक्तमाश्रयितुम् । आनन्दमयोऽभ्यासा दित्युक्त्वा-ऽनुपदमेव नेतर इत्युच्यमाने तेन तद्ग्रहणस्यानुचितत्वात्, न सोनुपपत्ते

रिति हि तदा भाव्यम् । इतरपदस्योपास्यार्थकत्वेनोपास्यो न प्रतिपाद्य इत्यर्थ इति चेत्, न । पूर्वं ज्ञेयस्य शब्दतोऽनिर्देशेन तदसंभवात् । अस्माकं तु सर्वत्र परमात्मन एव बुद्धिस्थत्वेन तेन पदेन तदितरजीवग्रहणं युक्ततमम्. यथा ऽनवस्थितेरसम्भवाच्चनेतर इत्यादावित्यलम् ।

भे—च । अत्र भेदपदस्य फलनिर्देशतदभावरूपवैषम्यपरत्वे व्यपदेशपदानन्वयः, नहि तादृशं वैषम्य मत्रकेनचित्पदेन व्यपदिश्यते । नचवाच्यं भेदेनानन्दमयस्य व्यपदेशो भेदव्यपदेश इति, तथापि वैषम्यवत्त्वेन व्यपदेशाभावा दुक्तदोषतादवस्थ्यात् । पूर्वपदार्थस्य व्यपदेशपदार्थैकर्मतयान्वयस्यैव स्वरसप्रतीतिकतया सतिसम्भवे तत्त्यागायोगाच्च । भूतादिपादव्यपदेशोपपत्तेः, तद्धेतुव्यपदेशाच्च, भेदव्यपदेशाच्चान्यः, अर्भकौकस्त्वात्तद्व्यपदेशाच्चे त्यादौ तथैवदर्शनात् । अतो भेदादित्येव सूत्रयितव्यं त्वत्पक्षे । पूर्वत्र फलनिर्देशो ऽत्रतु स नास्तीतिवैषम्यसत्त्वादत्रोपासनविवक्षा न संभवतीत्यर्थवर्णनसंभवात् । निपुणनिरूपणे तु फलाभावा दित्येव सूत्रयितव्यम् । अर्थान्तरभ्रमासंपादकत्वात् भेदपदस्य फलनिर्देशाभावरूपवैषम्यपरत्वस्यास्वरसत्वाच्च ।

**अ—स्ति** । एतत्सूत्रार्थवर्णनमप्यसंबद्धम् । सूत्र उपक्रमश्रुतसर्वकामावाप्तेः ब्रह्मभावापत्तिरूपत्वबोधकपदलेशादर्शनात् प्रत्युत विरोधदर्शनात् । यदाह्येवैष—अभयङ्गतोभवतीतिशास्त्रेण ब्रह्मभावापत्तिरूपमुक्तिप्रतिपादनात्तदेककण्ठ्येन सर्वकामावाप्तिश्रुते रपि तत्परत्वस्यैवाश्रयणीयतया तस्या निर्विशेषस्वप्रधानब्रह्मविज्ञानफलत्वमेवार्थसामर्थ्यादंगीकार्यम्, न सविशेषानन्दमयजीवोपासनफलत्वम् वैपरीत्यात् । अतोत्र नोपासनविवक्षासंभव इति सूत्राभिप्राय इति खलु त्वदाशयः, स सर्वात्मना न युज्यते ।

यदाह्येवैषइतिश्रुते स्तादृशार्थकत्वासंभवस्य सूत्रस्यातत्परत्वस्य च पूर्वमेवोप-पादितत्वात् । अस्मिन्नस्यतद्योगमितिपदत्रयपरामर्शे जीवब्रह्मभेदस्यैव सुस्पष्टं प्रतीतेः । तद्योगमित्यत्र तत्पदेनब्रह्मणोग्रहणेऽस्मिन्नित्यस्यानन्वयापत्तेः । नहि जीवस्य ब्रह्मणि ब्रह्मयोगइत्युक्तीरुचिरा । अतोऽस्मिन्नित्यस्यैवैयर्थ्यंच । तदात्मनायोग स्तद्योग इतिचातिक्लिष्टम् । अत स्तत्पदं ब्रह्मातिरिक्तपरमेव प्रतिपत्तव्यम् । उपक्रमश्रुतसर्वकामावाप्तेरुपसंहारगतवाक्यानुगुण्येन तद्भावा-पत्तिरूपत्वाभ्युपगमोऽपि हास्यः । एतदपेक्षया कूटस्थभाष्यमुपेक्ष्यसूत्रस्याऽस्य सोश्नुतइतिवाक्यविषयकत्वाश्रयणमेव वरमुत्पश्यामः । त्वत्पक्षे प्रायश स्सूत्राणांवाक्यविशेषविषयतासूचकलेशरिक्ततायाः एव दर्शनेन सर्वेषामपि वाक्यानां सर्वसूत्रविषयत्वसंभवात् । साक्षादस्यैवविषयवाक्यत्वे पूर्वोक्त-न्यायविरोधाभावाच्च । किंच ब्रह्मवेदब्रह्मैवभवतीत्यादिवाक्यान्तरानुगुण्येन ब्रह्मविदाप्नोतीत्यत्राप्नोते र्भवत्यर्थकत्व एतदानुगुण्येन सर्वकामावाप्ते स्तद्भावा पत्तिरूपत्व ईदृशसुक्ते जीवोपासनफलत्वासंभवस्य तत्क्रतुन्यायेन सिद्ध्या ऽत्रानन्दमयोपासनाविवक्षायांमसंभावितायां किं सूत्रेण ।

इदमत्र मध्यस्थै र्विद्वद्भि र्विगतपक्षपातै र्विभावनीयम् । परमते सजातीयविजातीयस्वगतभेदरहितं केवलचैतन्यात्मक मधिष्ठानरूपं शुद्धं ब्रह्मैव सत्यम् । तस्मिन्सर्वोऽपिप्रपञ्चोऽध्यस्त स्सर्पइवरज्जौ मिथ्याभूतः । एवं संसारि-त्वरूपं जीवत्वं तद्विशिष्टजीवो वा जगत्कारणत्वादिरूपमीश्वरत्वं तद्विशिष्ट ईश्वरो वा तस्मिन्नध्यस्तं मिथ्याभूतमेव । अन्यथा द्वैतप्रसंगात् । इत्थंचात्रश्रुतं पुच्छब्रह्म जीवोवेश्वरोवाऽधिष्ठानचैतन्यंवेतिविचारे प्रथमः पक्ष स्तदनभ्युपगमा-देव निरस्तः । तृतीयोपि न संभवति, पूर्वं आत्मन आकाश इत्यादिनाकाशादि-सकलप्रपञ्चकारणत्वेनश्रुतस्यैव तै र्ब्रह्मपुच्छमिति ब्रह्मसंशब्दितत्वाभ्युपगमात्,

कारणत्वस्येश्वरनिष्ठत्वात् । पूर्वमात्मपदस्येश्वरपरत्वेप्यत्रब्रह्मपदं निर्विशेषचैतन्यपर मेवेति तु न शंक्यम् । तथासतिपूर्वत्रैवोत्तरत्त्रापि भीषास्मादित्यादावेतदनुवृत्त्यसंभवेन मध्येविच्छेदेन च कृत्स्नप्रकरणस्य निर्विशेषपरताया गतत्वात् । किंचोपक्रमे निर्विशेषप्रतीति रुपसंहारेनिर्विशेषप्रतीति रितिसंभूय तैश्शश्वदुद्घुष्यते, तत्कथम् ? ब्रह्मविदित्युपक्रमे यतोवाच इत्यत्राप्यानन्दंविद्वानितिवेद्यत्वादिप्रतीतेः । यदि यतोवाच इति वाच्यत्वाभावमभिप्रेया त्तर्ह्यनुपदंविद्वा नितिकथं तद्वेदनं ब्रूयात् । अन्यत्सर्वप्रागेवप्रतिपादितम् । अतस्तेषांकृत्स्नप्रकरणनिर्विशेषपरत्वोक्तिर्निर्मूलेवेति ।

एतावता ऽऽनन्दमयाधिकरणसूत्राणां परैः प्राचीनै रर्वचीनैश्च स्वेच्छयाऽर्थवर्णनं दुरुद्धरदोषजालकबलीकृतत्वा त्सर्वथा हेय मिति प्रत्यपादि । अतःपरं कस्यचिदाधुनिकस्याग्रहपिशाचग्रस्तस्य परम्परासंबद्धं बहु जल्पतो मशकादिपदप्रयोगमात्रेणपरग्रन्थखण्डनं स्वकृतेर्नामविशेषकरणमात्रेणस्वपक्षेसूत्राणामानुगुण्यनिर्वाहञ्च मन्वानस्याऽऽनन्दमयाधिकरणविषया समुद्रघोषतुल्या वाक्यावलिः प्रसंगाद्विचार्य निरस्यते । अयंह्यत्रतदीयनिर्गलितार्थः । अत्र प्रथमं सूत्रषट्केन मीमांसकस्य तत स्सूत्रद्वयेन सांख्यस्य च निरासः क्रियते, एतदेव लोकन्यायानुगुणं सुसंगतंच । श्रीभाष्ये आनन्दमयजीवत्वाशंकानिराकरणपरतया सूत्राष्टकव्याख्यानसंगतम् । आ—सात् । अत्रोत्तरत्रानन्दपदेन ब्रह्मणः पुनःपुनःपरामर्शरूपाभ्यासा दानन्दमयोब्रह्मे त्यर्थो न संभवति । अन्ततो विकारार्थकमयट्प्रायपाठेनानन्दमयो न ब्रह्मे त्याक्षेपे प्रथमसूत्रेण ब्रह्मप्रतिपादकानन्दपदाभ्यासेन समाधानमुच्यते । एवंसति प्रायपाठस्याकिञ्चित्करत्वाशंकायां द्वितायेन पर्यायान्तरगतापेक्षया प्रकृतपर्यायगताश्रयणस्यैव युक्ततया प्राचुर्यार्थकत्वमेवोचितमिति प्रायपाठापुरस्कार

एवेति समाधीयत इति हि वक्तव्यम् । इत्थंचाभ्यामस्यनिष्प्रयोजनत्वेनोत्तरा दित्येव वक्तुमुचितम् । किंचोत्तरेणानन्दपदेनार्थनिर्णयोपि न संभवति । विकारार्थकमायपाठे आनन्दमयस्य प्रियमोदादिफलवत्त्वे च जाग्रति ज्योतिषेत्यादाविवाऽर्धनिर्देशरूपतया तदुपपत्ति रित्यभ्युपगमस्यैव युक्तत्वात् । विकारार्थकत्वं प्राणमय एव परित्यक्त मिति तु न युक्तम् । कोशपंचकात्म-पंचकस्याप्रतिपादनात् । एकस्यैव तत्तन्मयतया तत्तद्विकारताया एव प्रतिपादनात् । मयटः प्राचुर्यार्थकत्वे विज्ञानमयस्यापि प्रकृतिमात्राभ्यामेन ब्रह्मत्वप्रसंगाच्च । किंच सूत्रे ऽभ्यासपदेन ब्रह्मपदाभ्याम एव विवक्षणीयः नत्वानन्दपदाभ्यासः. पूर्वकेनापिसूत्रेण ब्रह्मण आनन्दपदवोध्यत्वानुक्ते स्तस्य तदर्थकत्वानिर्णयात् सद्ब्रह्मादिपदबोध्यस्यैवोक्तत्वात् । किंच यदभ्यस्तं तदेवोपक्रान्त मिति नियमोपि न संभवति । उपनिषदि पारिव्राज्यविवक्षया प्रथमं भार्याद्वयप्रस्तावात् । रावणादिकं प्रस्तुत्य श्रीरामादीनामभ्यासदर्शनात्, स्थूलारुन्धतीप्रदर्शनस्थल उपक्रान्तस्योपसंहारादर्शनाच्च । अतो यत्रयदभ्यस्यते तत्रतदेवविवक्षित मित्येव साधु, नतु तदेवाधिकृतमिति । अभ्यासो नाम शतगुणितोत्तरक्रमेणगुणनम् । तथाच प्रचुरानन्दवत्त्वादानन्दमयोब्रह्मे तिश्रीभाष्यकारव्याख्यान मपि मन्दम् । तथासत्युत्तरसूत्रार्थस्याप्यनेनैव क्रोडीकृततया तद्वैयर्थ्यप्रसंगात् । पूर्वपक्षिणो व्याकरणानभिज्ञताया श्शफर्थैकनिर्णेयत्वेन प्राचुर्यार्थकत्वमपि मयटोस्तीति ज्ञापनार्थत्वस्यापि तस्य वक्तुमशक्यत्वात् । इत्थंचानन्दमयवाक्यं ब्रह्मपरं ब्रह्मपदाभ्यासा दित्यर्थएवा श्रयणीयः । अनन्तरं पुच्छशब्दान्नेति पुनश्शंकायां प्रायापत्ते रिति परिहारः क्रियते । अत्राधिक्या दित्यपि विवक्षितम्, अवयवान्तरापेक्षयापुच्छमात्र-प्रतिष्ठेतिविशेषणाधिक्याद्ब्रह्मैवप्रधानमित्यर्थोऽभिप्रेतइति, नानन्दमयादिकं,

इदंवक्तव्यमितिविवक्षापूर्वमुक्तम्, अपितु पुच्छब्रह्मप्रतिपत्तिशेषतया । तदेव तु वक्तव्यमित्युक्तम्, यस्मात्पूर्वपंचकस्यापि प्रतिष्ठाभूतं तदित्युच्यत इति । मान्त्रववर्णिकसूत्रस्य वृत्तिकाराद्यर्थो न सूत्रानुगुणः । मन्त्रवर्णोक्तं ब्रह्मैवानन्दमय इत्यनेन प्रतिपाद्यत इति खलु तदभिमतोऽर्थः. स न संभवति गायतेरत्यन्तास्वरमार्थकत्वप्रसंगात्, संभवति स्तुतिरूपमुख्यार्थकत्वे तत्परित्यागायोगात्, आनन्दमयवाक्ये च स्तुत्यदर्शनात् । किंच मन्त्रवर्णे नपुंसकलिंगस्यानन्दवाक्ये पुल्लिंगस्य च सत्त्वेन न प्रत्यभिज्ञासंभव इति नास्य तद्ब्राह्मणत्वोपपत्तिः । अपिच प्राकरणिकएववर्चोनि सूत्रणमुचितं तत्पक्षे । ततस्सूत्रस्थनपुंसकलिंगमान्त्रवर्णिकपदेन मन्त्रवर्णस्थताद्दशब्रह्मपदघटितवाक्यं स्मार्यते । तच्चासन्नेवेत्यादिरूपम् । तत्तुब्रह्मपदद्वयवत्त्वादभ्यासरूपं भवति, अर्थवशादर्थवादरूपंच । नेतर इतिसूत्रे विपश्चित्त्वाद्यनुपपत्तेरिति व्याख्यानमयुक्तम् । स्वपक्षे पूर्वमुपपादितस्यैव धर्मस्य परपक्षेऽनुपपत्तेर्वक्तव्यत्वात् । नहीतःपूर्वमानन्दमयस्य विपश्चित्त्वोपपत्ति रुक्ता । किंचानुपपत्ते र्न मान्त्रवर्णिकोजीवः, भेदव्यपदेशादानन्दमयो न जीव इति सूत्रयोः प्रक्रमभेदश्च । निर्विशेषस्य जीवत्ववद्विपश्चित्त्वमपि संभवती ति सूत्रार्थासामञ्जस्यं च । भेदसूत्रस्यानन्दमयो न विवक्षितः, तद्भिन्नत्वेन तत्प्राप्यफलतया पुच्छब्रह्मणो रस मितिनिर्देशा दित्यर्थः । नचोत्कृष्टफलभाक्त्वेनानन्दमयोजीव एव प्रतिपाद्य इत्यभ्युपगमात्तद्विवक्षणेपि न बाधक मितिवाच्यम्, तथासति रसंह्येवायमिति वाक्ये ऽयमित्यनेनानन्दमय एव परामृष्टव्य इति सूत्रार्थवर्णनं ममैवानुकूलं संवृत्तम् । वृत्तिमते फलत्वव्यपदेशाच्चे तिसूत्रणीयम् । आनन्दमयोजीवः स एव रसंह्येवायमित्यत्राय मिति परामृश्यत इति वदन्तं प्रति नहि लब्धैव लब्धव्यो भवती ति

वक्तुमयोगात् । अन्योन्तरआत्मानन्दमय इति जीवाद्भेदेनव्यपदेशादित्यर्थो पि न युक्तः, तथामति उक्तत्वाच्चे त्येव सुवचत्वात् । अथ सूत्रद्वयं सांख्यनिरासार्थम् । अनुमानसिद्धत्वादेवानुमानस्याशा न कार्या, अपूर्वस्यैव-शास्त्रवेद्यत्वात्, कामयितृत्वश्रवणाच्च । नह्यचेतनस्यतत्संभव इति प्रथम-सूत्रार्थः । जीवस्य सृष्टावानुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा ऽवर्जनीया, तथैव चतुर्मखादीनां दर्शनात् । इहतु कामादेव सर्गश्श्रूयत इति श्रीभाष्येव्याख्यानमसंगतम्, क्लिष्टत्वात् । प्रकृतेरुत्पत्तिर्वियदादिरूपेण-परिणामः जीवस्य तु धर्मभूतज्ञानविकासः तदुभयविशिष्टत्वमेव परस्य स्रष्टृत्व मिति स्वाभ्युपगमविरोधाच्च । सूत्रस्य सांख्यनिरासपरत्वानंगीकारे लोकन्यायत्यागापत्तिश्च । श्रुतौ कुत्राप्यानुमानपदेन प्रधानोक्त्यदर्शना दप्यसंगतमिदम् । ततो ननु गौणमस्तुकामयितृत्वं अस्तुचमानान्तरसिद्ध-स्यापिशास्त्रप्रतिपाद्यत्व मिति शंकायामुच्यते अस्मिन्निति । अस्मिन् पुच्छे ब्रह्मणिअ स्यानन्दमयस्य तद्योगं तादृशयोगम भयपूर्वकप्रतिष्ठाशब्दितानन्य-व्यापारत्वविशिष्टवर्तनरूपं शास्ति यदाह्येवेष इति शास्त्र मित्यर्थः । अस्मिन्नानन्दमयेऽस्यजीवस्यानन्दयोगं रसंह्येवाय मिति शास्त्रं शास्ती ति व्याख्यानमयुक्तम् । तत्र कस्यापि शासनस्या दर्शनात् । अभयं प्रतिष्ठा मित्यत्र तु तस्मादवश्यंप्रतिष्ठांविन्देते ति शासनं संभवति । "एवंसति कोहिनामैतदेवंव्याकुर्याद्विनाश्रीरामानुजम् । सोपि किमर्थमेवंव्याकुर्यादसति-भगवत्पादीयेभाष्ये" । नन्वीक्षत्यधिकरणेप्रधानाद्ब्रह्मणोव्यावृत्तिसाधनव दत्रजीवाद्व्यावृत्तिसाधनमावश्यकमाश्रीयताम् । अतो वृत्तिकारव्याख्यैव युक्ते तिचेन्न । सांख्यमीमांसकौ प्रति जगत्कारणत्वेक्षितृत्वादिविशिष्टंब्रह्मेति साधने तदभ्युपगताज्जीवाद्ब्रह्मणोव्यावृत्ते रर्थसिद्धत्वेन तदर्थसूत्रानपेक्षणात् ।

एवं ब्रह्मणोजीवान्यत्वं, कथं ब्रह्मणिगतिसामान्यं आनन्दवल्यांजीवस्यैव-प्रतिपादना दितिप्राप्ताक्षेपस्यतस्याअपिसयुक्तिकंब्रह्मपरत्वस्थापनेननिरासाच्च सिद्ध्यती तिज्ञेयम् । किंच कोशपंचकपर्यालोचनायामपि मन्मतमेवसिद्ध्यति । विज्ञानमयस्य पूर्वे त्रयोपि गौणात्मानः स्वयं तु मुख्यः पञ्चम स्तु स्वस्याप्यात्मा मुख्य इति न वक्तुं शक्यं एकस्यानेकात्माभावात् । अतः पञ्चमोवा षष्ठोवा सर्वात्मैकएवात्मा अन्येनात्मान इत्येव तत्राश्रयणीय मिति । ननूक्तरीत्या सूत्राणां पुच्छब्रह्मवादानुगुण्ये स्फुटे कथं "सूत्राणितु" "गुणेत्वन्याय्य-कल्पना" इति भाष्यभामत्यौ, कथंवा कल्पतरौ तदुपपादन मितिचेन्न । भाष्यादिग्रन्थस्य स्वमते सूत्रानुगुण्याभावाशंकामूलकत्वाभावात् । सूत्रे लक्षणानाश्रयणीये तिलक्षणाभीरुर्वृत्तिकारव्युत्पादनाय प्रवृत्तत्वात् । सूत्रकार-स्यानन्दमयइतिलाक्षणिकपदप्रयोगोपि श्रुति श्शुद्धंब्रह्म लक्षणयैव प्रति-पादयतीतिद्योतनार्थः । एवंतर्हि कथं प्रियशिरस्त्वाद्यप्राप्तिरितिसूत्रं कृत्वाचिन्ते तितद्भाष्यं च संगच्छत इति चेत्, यदिकश्चिदानन्दमयोपि-ब्रह्मेतिब्रूया त्तदा तेनापि प्रियशिरस्त्वाद्यप्राप्ति रंगीकार्येति तात्पर्येणेति गृहाण । अत्रप्रथम सूत्रत्रयेणानन्दमयस्यब्रह्मत्वपूर्वपक्षे ततस्सूत्रद्वयेनपरिहार इत्यपि ज्ञेयम्, सूत्राणामनेकार्थत्वस्यालंकारत्वात् । तस्माद्वृत्तिकाराद्यभि-मतार्थपरत्वं सूत्राणामयुक्तमिति ।

तदेतत्सर्वं स्वकपोलकल्पितं स्वपूर्वग्रन्थानभिज्ञताविजृम्भितं प्रमाणा-न्तरानुगुणसमीचीनदुर्भेदयुक्तिसहस्रदत्तहस्तावलम्बनबहुश्रुतहृदयङ्गमयथावस्थि-तौपनिषदार्थजातप्रतिपादकानितरसाधारणातिगंभीरमधुरतररचनाविशेषविद्योत-मानश्रीभाष्याभिधानप्रबन्धरत्नदर्शन —तद्विषयमध्यस्थविद्वज्जनश्लाघाघोषश्र-वण-सार्वकालिकतन्मननरूपेन्धननिबन्धनासूयादिज्वालाशतव्याकुलविद्वेषवह्नि-

वमनरूपं चेति विद्वद्भि रुपेक्ष्यम् । तथाहि: यदुक्तं सर्वेषां सूत्राणा मानन्दमयजीवत्वाशंकानिराकरणपरत्ववर्णन मयुक्त मिति तन्न । पूर्वं ब्रह्मणोऽचेतनाद्व्यावृत्तावुक्तायां चेतनस्य तु जीवस्य कारणत्वे न किमपि वाधकम् मिद्धस्य धर्मिणः कारणत्वमात्राभ्युपगमस्य लघुत्वा दितिशंकाया उन्मेषावश्यंभावेन तत्परिहारपरताया एव सूत्राणा मभ्युपगन्तव्यत्वात्, स्वारस्याच्च । नहि "आनन्दमयः—विकार—प्राचुर्या"दिति सूत्रद्वयश्रोतु स्सचेतस आनन्दमयपर्यायेपुच्छब्रह्मप्राधान्येनर्निदिष्टं, पुच्छशब्दस्तुनस्वार्थविवक्षयाप्रयुक्तोऽपितुपर्यायान्तरानुगुण्यमिद्धय इत्यर्थो धियमधिरोहति । यत्तूक्तं लोके प्रत्येकं पराजितयो रपि मिलित्वापुनरागमनं शूरेण मिलितयोरपिपराजयश्च दृश्यत इति मीमांमकसांख्यनिरासकत्वं युक्त मिति तन्न । अत्र पक्षद्वयमंमतस्य कस्यचिदेकस्य विलक्षणपूर्वपक्षस्य निराकरणपरत्वेन कस्यापि सूत्रस्य कैरपि व्याख्यनादर्शनात् । तथासत्येवत्वदुक्तलोकन्यायानुसरणसिद्धेः । त्वयापिहिसूत्रषट्कंमीमांमकनिसासकम्, अपरंद्वयंसांख्यनिरामक मित्येवोच्यते । नचवाच्यं एकस्मिन्नधिकरणे उभयोःप्रवेशोस्त्येवे ति, प्रत्येकंप्रत्यवस्थानांगीकारे युद्धभूम्यैक्यस्येवाधिकरणैक्यस्याकिंचित्करत्वात् । लोके हि द्वयोराज्ञोः प्रत्येकं प्रबलेनपराजितयो रावाभ्यांसंभूयतेनकलहःकर्तव्य इति निश्चित्यैव युद्धाय पुनरागमनंदृश्यते तथैव क्रियते च । नच युद्धभूमिप्राप्त्यनन्तरं द्वयोर्युद्धेप्रवृत्त एकस्यापजयपर्यन्तमन्येनकस्मिंश्चित्कोणेतूष्णींस्थीयते । तथासति पुनरागमनस्यैव नैष्फल्यात् तत्रस्थले मेलनव्यवहाराभावाच्च । तयोःप्रत्येकंप्रवृत्त्ययोगाच्च । अत्रतु मीमांसकस्सांख्यश्च प्रत्येकमेवानन्दवल्याजीवपरत्वाचेतनपरत्वरूपंद्विविधंपूर्वपक्षं प्रापयतीति त्वयाभ्युपगम्यते । इत्थंचेक्षत्यधिकरणापेक्षयास्मिन्नधिकरणे

सांख्यस्यप्राबल्यहेत्वभावे किं पुनःप्रवृत्त्या । मीमांसकंपुरस्कृत्यपृष्ठतोनिलीनं तूष्णीकं तत्पराजयेच पलायमानं प्रागेवप्रहृतं पुनःप्रहरती तिकःपुनरितोप्य-न्योस्त्यधर्मः । अतःप्रकृतेनेतन्न्यायाप्रवृत्तिरिति सूत्रकारःपिष्टमेवपिनष्टीति-स्यादिति । यदप्युक्तम् अन्तत आनन्दमयस्यब्रह्मत्वेवाक्यशेषस्यैव शरणी-करणीयत्वेनो त्तरादित्येवसूत्रणमुचितं मिति तदपि न । अस्य प्रथमसूत्र-तात्पर्यार्थाज्ञाननिबन्धनत्वात् । अयं हि तत्तात्पर्यार्थः । आनन्दमयपर्याये प्राधान्यं तावदानन्दमयस्यैव अवयवित्वात् न पुच्छस्य अवयवत्वात् । एवंच प्राधानतया पूर्वोक्तस्यैवोपरिष्टादनुवृत्तेरुचितत्वेनानन्दमयएवबहुक्त्वआनन्द-शब्देनोच्यते, ज्योतिश्शब्देन ज्योतिष्टोम इव वाऽन्यथावे ति पूर्वपक्षि-सिद्धान्त्युभयसम्प्रतिपन्नोर्थः । तत्र यथायथं बद्धशुद्धावस्थजीवस्वरूपविषया स्ते शब्दा इति पूर्वपक्षी । सिद्धान्तिनाचैवमुच्यते । अभ्यासस्थले यादृशार्थस्यग्रहणं तादृशार्थ मादौ संभवन्तं परित्यज्य विकारतापन्नजीव-परत्वकल्पनंतावन्नयुक्तम् । तत्र च सर्वप्राणिप्राणयितृत्वान्यानन्दयितृत्वादीनां ब्रह्मत्वस्य च जीवात्मन्यसंभावितानां कथनेना नन्दपदार्थस्य परमात्मत्व-मावश्यकम् । अतो बद्धे शुद्धेवा सर्वानन्दयितृत्वादीनामसंभवेन तत्र जीवविलक्षणस्यावश्यांगीकार्यत्वा त्तत्समानार्थआनन्दमयोब्रह्म । एवमनन्दमयं-पदघटकानन्दशब्दार्थ एव सैषानन्दस्येमीमांसा, सएकोब्रह्मणआनन्दः, आनन्दंब्रह्मणोविद्वा निति पुनःपुनरभ्यस्यते । तत्रचानन्दवत्त्वं जीवातिरिक्त एव प्रतिपत्तव्यमित्यभ्यस्यमानानन्दवत्त्वादानन्दमयोब्रह्म । एवमभ्यासोगुणनम् । निरतिशयदशाशिरस्कत्वेनाभ्यस्यमानानन्दवत्त्वादप्यानन्दमयोब्रह्म । अत्र गुणनेन जीवानन्दातिशयिततांप्रदर्श्य निरतिशयत्वकथनात् अयंजीवानन्दोन-भवति । नचप्राचुर्येदुःखाल्पत्वंशक्यम् , निरतिशयानन्देतदयोगात् , प्रकरणे-

जीवानन्दमादायाभ्यासेऽप्यकृतत्वेनप्राचुर्यस्यव्यधिकरणसजातीयाल्पत्वमादायापि-निर्वाहसंभवाच्चेत्यभ्यासशब्दप्रयोक्तुराशयः । एवं बहुप्रयोजनमभ्यासपदं-व्यर्थमभिमन्वानस्यतत्र यदुत्तरादित्येवनूत्रणमुचितमितिवचनं यदपिब्रह्मविद्या-भरणे तल्लिङ्गा दित्येववक्तव्य मिति तदुभयंभ्रान्तत्वप्रयोजनापरामर्शमूलमेवेति ।

यदपि उत्तरेणानन्दपदेनार्थनिर्णयो न सम्भवतीत्यादि तदपि न । विकारप्रायपाठाभावात् , प्रियादिसंबंधस्य परमात्मत्वाविरोधित्वस्य पूर्वमेवोप-पादितत्वाच्च । यदपि प्रणमय एव विकारार्थकत्वत्यागोक्तिरयुक्तेत्यादि तदपि न । तत्रान्योन्तरआत्माप्राणमय अन्योन्तरआत्मामनोमयः इत्येवंभिन्नभिन्ना-नामेवात्मनांसुस्पष्टंप्रतिपादनेन प्राणादिरूपप्रकृतिबोध्यानांप्राणनवृत्त्यादि -रूपाणांपंचवृत्तिप्राणादिपुप्रचुरतायाः प्रमाणप्रतिपन्नत्वेन मयटः प्राचुर्यार्थकत्व-संभवेन च निष्कारणनिषेधोक्तेरेवायुक्तत्वात् । एकस्यैवात्मनस्ततदवच्छिन्न-त्वेनतत्तद्विकारत्व मितितु नैव श्लिष्टम् । तथासति बहुवारमन्यापदावृत्ते बाधप्रसंगात् । तदवच्छिन्नत्वस्य तद्विकारत्वाप्रयोजकत्वस्य प्रागुपपादितत्वाच्च, अरुन्धत्यपेक्षया स्थूलताराणामिव मुख्यात्मापेक्षयाप्रणमयादीनांभेदस्यावश्य-कत्वेन तेषामेकत्ववर्णनायोगाच्च। अपिचात्र एकस्यैव तत्तन्मयतयातत्तद्विकारता इति त्वदीयोक्तेः कोर्थः ? तत्तत्प्रचुरतयातत्तद्विकारतेति तु नाभिमतम् । प्राचुर्यार्थकत्वस्य निरस्कारात् प्राचुर्यस्य विकारत्वाहेतुत्वाच्च । तत्तद्विकारतये-त्यपि न, हेतुसाध्ययोरभेदात् । तर्हि कथं लेखने कथंचित्संगमनंस्यादिति-चेत्तत्तद्विकारतयातत्तन्मयनेतिलेखनेकथंचिदितिगृहाण । यदपि प्राचुर्यार्थ-कत्वेप्रकृतिमात्राभ्यासस्यतुल्यतयाविज्ञानमयोपि ब्रह्म स्यादिति तदपि हास्यम् प्रकृत्यभ्यासमात्रस्य हेतुत्वानंगीकारात् ब्रह्मपरस्यानन्दशब्दस्याभ्यासो ह्यानन्द-मयस्य ब्रह्मत्वे हेतु रुच्यते । "परस्मिन्नेवह्यात्मन्यानन्दशब्दो बहुकृत्वो

भ्यस्यत" इति हि त्वत्कूटस्थभाष्यमपि । यदि विज्ञानपदाभ्यामस्थले तत्पदवाच्यस्य परमात्मासाधारणधर्मवत्त्वमत्रोपलभ्येत तदा सोपि ब्रह्म स्यादभ्यासबलेन नचैतदस्ति । यदपि सदादिशब्दस्यैव परमात्मपरतायाः पूर्वमुक्तत्वेनानन्दशब्दस्य तत्परत्वानिर्णय इति तदपि न । नहि यस्यशब्दस्य पूर्वं परमात्मपरत्वमुक्तमत्र तेनैवानन्दमयस्य परमात्मत्वं साधनीय मिति नियमः । स्थलान्तरे प्रमाणान्तरेणपरमात्मपरतयानिर्णीतेनापिशब्देन प्रकृते साधनसंभवात् । अन्यथा ईक्षणचेतनधर्मतायाः पूर्वमनुक्तत्वेनईक्षतेर्गति-निर्देश', आत्मशब्दस्यचेतनपरतायाःपूर्वमनुक्तत्वेनात्मशब्दादितिनिर्देशः. अन्तरात्मन्पुरुषइत्यत्रसप्तम्यन्तपदवाच्यात्प्रथमान्तपदवाच्यस्यभेदोस्तीतिपूर्वम - साधितत्वेन शब्दविशेषादितिनिर्देशश्च न संगच्छेरन् । किंवहुना सर्वोपिसौत्रोहेतुर्निर्देशः पूर्वसाधनमपेक्षेत यद्येतेषांसांगत्यमिष्यतेतर्हिपूर्वोक्त-रीत्यापरमात्मपरतयानिर्णीतानन्दपदाभ्यासेन परमात्मत्वसाधने कः प्रद्वेषः । यदप्युक्तं यत्रयदभ्यस्तंतत्रतदेवोपक्रान्त मिति नियमासंभवादभिमतासिद्धि रिति, तदत्यन्तहास्यम् । प्रकृतानपेक्षिततादृशनियमाभावेपि यदभ्यस्तंत-दुपक्रान्तमेव, नानुपक्रान्तस्याभ्यास इति प्रकृतापेक्षितनियमस्य निर्बाधत्वेन सूत्रार्थानुपपत्त्यभवात् । अत्रविकल्प्यते किमभ्यस्तस्य प्रकरणारंभे वाक्येन पदेन वा बोधितत्वरूपोपक्रान्तत्वनियमोऽत्र निषिध्यते । किंवा तस्या-भ्यासात्प्राक्प्रस्तुतत्वनियमः ; नाद्यः इष्टत्वात् नान्त्यः पूर्वप्रस्तुतपदार्थस्य पश्चात्परामर्शरूपाभ्यासस्य प्रथमंप्रस्तावरहितविषयेऽनुपपन्नत्वेन प्रथमप्रस्तुत-त्वज्ञनेनैवाभ्याससद्भावस्यज्ञातव्यत्वात् । प्रकृतेचरसोवैसः आकाशआनन्दः आनन्दाद्ध्येवेत्यादौ आनन्दपदार्थस्याभ्यास इति निर्विवादम् । सच परमात्मेति त्वयाप्युच्यते तस्य पूर्वप्रस्तावोपि त्वदभिमतएव । अन्यथाऽभ्यासायोगात् ।

परंतु पुच्छब्रह्मणएवोपक्रान्तस्यसोभ्यासइत्युच्यनेत्वया । तस्यावयवत्वेनाप्राधान्यादानन्दमयस्यैवायमिति वयम् ।

दृश्यनेचोपनिषत्सु श्रीरामायणादौ च नियमेनाभ्यम्तस्योपक्रान्तत्वम् । तथाहि ईशोपनिषदि अनेजदेकम्, तदन्तरस्यमर्वस्ये त्यादौ यदात्मतत्त्वमभ्यस्यने तदीशावास्यमितिप्रथमोपक्रान्तमेव । केनोपनिषदि नतत्रचक्षुर्गच्छति, यद्वचानभ्युदितम्, यन्मनसानमनुत, इत्यादिना यदभ्यस्यते तत् केनेषितमिन्युपक्रान्तम् । कठोपनिषदि नततोविजुगुप्सते एतद्वैत दित्यादिना भ्यम्तं सर्ववेदायत्पदमामनन्तीत्युपक्रान्तम्, प्रश्नोपनिषदि सएषोकलोऽमृतोभवतीत्यादिनाभ्यस्तः पुरुषः इहैवान्तःशरीरेसोम्यसपुरुष इत्युपक्रान्तः । एव मन्यास्वपि द्रष्टव्यम् । त्वदुक्तस्थलेऽप्यन्यस्यैवोपक्रमो वर्णनीयः, न भार्याद्वयस्य, तस्य प्रतिपिपादयिषितत्वासंभवात् । पारिव्राज्यस्य विवक्षितेत्वमपि न युक्तिमत् । शास्त्रस्य तत्र तात्पर्यवर्णनस्यासुन्दरत्वात् । किंतु तत्र शास्त्रतात्पर्यविषयभूतं यत् योन्यत्रात्मनस्सर्वंवेदेत्यादिनाऽभ्यस्यते तदात्मतत्वं आत्मनस्तुकामायपतिःप्रिय इत्युपक्रान्तमेवे ति न व्याप्तिभंगः । तत्पूर्वांशश्च तदुपोद्घातत्वादिना संगतः । श्रीमद्रामायणादावपि श्रीरामादेर्दिव्यचरित्रवर्णनायैवप्रवृत्ते तदुपक्रमो ऽस्त्येव । कोन्वस्मिन्नित्यादिप्रश्नोत्तरत्वेन इक्ष्वाकुवंशप्रभवो रामोनामेत्यादिना स हि प्रस्तूयते । तस्याभ्यासस्तु त्वयाप्यभ्युपगतः । एवमन्यत्रापि । सूक्ष्मारुन्धतीप्रदर्शनस्थले त्वन्यज्ञापनायान्यप्रदर्शन एव प्रवृत्तत्वात् न दोषः । किंच तत्रापि पर्यायपर्याय मरुन्धतीपदप्रयोगेण तस्या उपक्रान्तत्वं दुरपलपम् । अभ्यामश्च तस्या एव । यदि नोपक्रान्तत्वं तर्ह्यभ्यस्यमानतापि नास्ती ति प्रकृते किं तेन ।

यदुक्तं यत्र यदभ्यस्यते तत्र तदेव विवक्षित मिति ; तदस्माकंनानिष्टम् । अत्रानन्दमयोब्रह्मैवाभ्यस्यते तदेवविवक्षित मित्यभ्युपगमात् ।

अपिचात्रादौ "अधिकृतस्यैवाभ्यस्यत्वा" दिति मध्ये "यत्रयदभ्यस्यते-तत्रतदेवविवक्षित मित्ययमेवार्थ आञ्जसः, नतु तदेवाधिकृतमिती" ति च वदतः कोऽभिप्रायः किमभ्यासस्य पूर्वप्रस्तावव्याप्यत्वं नाऽस्तीति, उत पूर्वप्रस्तावस्याभ्यासव्याप्यत्वंनास्तीति । नाद्यः तस्य तद्व्याप्यताया निपुणतरं निरूपणात् । धूमवत्तदेववह्निम दितिवाक्येन धूमेवह्निव्याप्यत्वस्येवाभ्यस्त-मेवाधिकृतमितिवाक्येनाभ्यासेप्रस्तावव्याप्यत्वस्य बोधनासंभवाच्च । नान्त्यः पूर्वप्रस्तुतस्य पश्चादभ्यासनियमाभावेना स्माभिरपि तदनभ्युपगमेन च तन्निषेधासंभवात्, यत् प्रस्तुतं तदेवाभ्यस्यत इत्यर्थकेना ऽधिकृतस्यैवाभ्य-स्यत्वा दितिवाक्येन वह्निमत एव धूमवत्त्व मितिवाक्येन वह्नौ धूमव्याप्य-त्वस्येव प्रस्तावे ऽभ्यासव्याप्यत्वस्य बोधनासंभवाच्च । तस्मादभ्यासस्य-व्याप्यत्वाभिमता वुत्तरत्वपूर्वानुसारेण, प्रस्तावस्यतत्त्वाभिमतौ पूर्वत्रोत्तरानु-सारेण प्रयोगस्यावश्यकत्वा देवंलेखन मसाध्विति ।

यदपि आनन्दस्य गुणनमभ्यास इत्ययुक्तम् । उत्तरसूत्रार्थक्रोडीकारप्रसंगा दिति, तदप्ययुक्तम् । तथासत्येवोत्तरसूत्रावतारोपपत्तेः । आनन्दमयपदवाच्य-मानन्दप्रचुरत्वाद्ब्रह्मे त्युक्तौ मयटोन्यार्थत्वाद्धेत्वसिद्धि रित्याशंकायां तन्निवार-कत्वेन तत्प्रवृत्तेः अत्यन्तोचितत्वात् । अन्यथा साध्यसाधने प्रकारभेदमनादृत्य निष्कृष्टप्रधानार्थमात्रदृष्ट्या सूत्रलाघवादरे ईक्षतेर्नाशब्दं गौणश्चेन्नात्मशब्दा दिति सूत्रद्वयवैयर्थ्यापत्ति र्दुर्वारा । आत्मशब्दान्नाशब्द मित्यस्यैवोचितत्वात् । एवमन्यदपिद्रष्टव्यम् । नचवाच्य मेवंसति व्याकरणानभिज्ञत्वं शङ्कितुः प्राप्नोति तच्चायुक्त मिति ; सर्वत्र पूर्वपक्षिण स्सिद्धान्तार्थापरिज्ञानस्या-वश्याभ्युपगन्तव्यत्वात्, अन्यथा पूर्वपक्षस्यैवासिद्धेः । त्वद्रीत्येक्षतेर्नाशब्द-मित्यादेरप्यसांगत्यप्रसङ्गः । नह्यचेतनप्रधानकारणवादिन ईक्षणंचेतनधर्म

आत्मशब्दश्चेतनपर इत्यादिज्ञानमपि नाप्ती ति वक्तुंशक्य मित्युक्ते स्तत्रापि तुल्यत्वात् । तत्र क्रियमाणस्य शङ्कापरिहारस्याचात्रापितुल्यत्वात् । वस्तुतो व्याकरणाभिज्ञैनैव, सत्यपि प्राचुर्यार्थकत्वे प्रायपाठानुसारा द्विकारार्थकत्वंयुक्त मित्याशङ्क्यते । सिद्धान्तिना च सर्वत्र विकारार्थकत्वाभावज्ञापनेन प्रायपाठ एव निराक्रियते । तस्य प्राचुर्यार्थकत्वसाधकत्व मेववाऽऽविष्क्रियत इति न किञ्चिदनुपपन्नम् । एतदुक्तंभवति मयटस्स्वार्थिकत्वेन शुद्धंजीवस्वरूप-मेवानन्दमयपदवाच्यम् , कथञ्चित्प्राचुर्यार्थकत्वेपि दुःखाल्पत्वस्यावश्यकत्वा त्मएवानन्दमय इत्याशङ्काद्वयमभ्यामा दित्यनेनपरिहृतम् । अथोपक्रमस्थ-प्रायपाठानुमारा द्विकारपरत्वमेवावश्यकम् । एवञ्च विकारत्वस्यावश्यकत्वे कथमपि प्रमाणान्तरेण तस्मिन्नानन्दप्राचुर्यावगमेपि तस्य दुःखाल्पत्वनिरूपित-त्वमपि सम्प्रति संभव न्न परित्याग मर्हति । इत्थञ्च विकारभूत-जीवाभिन्नार्थकमेवा भ्यासस्थलादिक मन्यथा नेय मिति पूर्वपक्षी प्रकारान्तरेण प्रत्यवतिष्ठत इति तदर्थे विकारविषये प्रायपाठाभाव एवात्र प्रदर्श्यत इति न पूर्वेणैतदर्थक्रोडीकारप्रसक्ति रिति विभावनीय मिति । यदप्युक्तं प्राचुर्यादित्यनेनाऽऽधिक्यादित्यपिविवक्षित मिति तदपि न; पञ्चस्वपिपर्यायेषु पुच्छस्य प्रतिष्ठात्वोक्त्या ऽभिमतसिद्धे र्दुरुपपादत्वात् । तत्र पञ्चस्वप्य वयवान्तराणामविवक्षितत्वस्य पुच्छ-मात्रस्य विवक्षितत्वस्य च लाभेपि पञ्चमपर्यायमात्रस्थपुच्छस्य पर्याया-न्तरस्थान्नमयाद्यधिष्ठानत्वस्य सर्वात्मना दुस्संपादत्वात् द्वितीयादिस्थ-पृथिव्यादिरूपपुच्छस्य पूर्वपर्यायस्थापेक्षयाप्रतिष्ठात्वस्यानङ्गीकारात् । पर्या-यान्तरावैरूप्याय प्रतिष्ठात्वस्यैकरूपताया आवश्यकत्वेन तस्याधिष्ठानत्व-रूपत्वोक्ते रयुक्तत्वाच्च । अतः पुच्छब्रह्मण श्श्रवणद्वयपृथिव्यादिपूर्व-

पुच्छापेक्षया न कश्चिद्विशेष इह सिद्ध्येदिति प्रतिष्ठाग्रहणपरेण विपरीतमेव संपादित मिति ।

यदपि मान्त्रवर्णिकसूत्रं वृत्तिकारादिमते न स्वरस मिति तदपि हेयम् । गायते स्स्तुतौ मुख्यत्वाभावेन तदादायार्थान्तरदूषणायोगात् । कै गै शब्द इति हि पठ्यते । नहि लोकेऽपि स्तुतौ प्रयुज्यते । मधुरंगायती त्यादौ मधुरंस्तौती त्यर्थस्य केनाप्यनङ्गीकारात् । अतः क्वचिन्मुख्यवृत्त्या शब्द-मात्रार्थकत्वं क्वचित्स्वरविशेषविशिष्टशब्दार्थकत्व मित्येव युक्तम्, न स्तुत्यर्थत्वमपि, लक्षणयापि तत्र प्रयोगादर्शनात् । इत्थञ्च गीयते पठ्यत इत्यर्थ एवोचितः । नहि त्वत्पक्षेप्यसन्नेवभवतीत्यदौ ब्रह्मणो वीणागानं श्रूयते, स्तुतिस्तु नार्थ इत्युक्तम् । अतएव 'योनिश्चहिगीयत' इत्यत्र योर्निरित्यपि पठ्यत इति त्वत्कूटस्थभाष्यम् । तत्रैवंव्याकुर्वतोभाष्यकारस्यात्र "प्रतिपाद्यतइति न पदार्थः" "स्तुतिस्त्वत्रनास्ती त्यभिप्रयता" इत्यभिप्राय-वर्णन मज्ञानमूलमेव । अस्तुवा त्वद्दृष्ट्या स्तुतौ गायतिः, तथापि न बाधकक्लेशः । अनितरसाधारणविलक्षणवस्तुजन्यप्रियमोदादिरूपानन्दविशेष-विशिष्टत्वेना नन्दमयस्यपरमात्मन स्स्तुत्युपपत्तेः । अपिच गीयत इत्यस्या सन्नेवेत्यादिनास्तूयत इत्यर्थवर्णनं भामतीविरुद्धत्वादप्युपेक्ष्यम् । तत्रहि स्वमतेन सूत्रयोजनावसरे "यत्सत्यंज्ञानमित्यादिना मन्त्रवर्णेन ब्रह्मोक्तं तदेत दुपायभूतेन स्वप्राधान्येन गीयते ब्रह्मपुच्छंप्रतिष्ठेती" तियोजितम्, नत्वसन्नेवेत्यादिकंस्पष्टम् । इत्थञ्च गीयत इत्यस्य प्रतिपाद्यत इत्यर्थ एव तदभिमत इति निश्चीयते, ब्रह्मपुच्छ मित्यत्र स्तुत्यदर्शनात् । यदि पुच्छत्वोक्तावपि स्तुतिमङ्गीकरोषि, तर्हि कः प्रद्वेषः प्रियमोदादिविशिष्टतया नन्दमयस्य स्तुतौ । अतो गायतेस्स्तुत्यर्थकत्वमप्रसिद्धं भाष्यभामतीविरुद्धं

परमतदूषणाय कृच्छ्रेण युक्तिमन्वेषयता बुद्धिप्रभावेनार्जितमुपहास्य मेवेति । यच्च मन्त्रब्राह्मणयोः प्रत्यभिज्ञाया आवश्यकत्वेन त्वत्पक्षे लिङ्गभेदा दानन्दमयवाक्यस्य न ब्राह्मणत्वसिद्धि रित्यादि ; तच्च तुच्छम् ; **परिमल-कारेणैव** "सूक्ष्मदृष्टया तत्प्रत्यभिज्ञानमात्रेणावगन्तव्यो मन्त्रब्राह्मणयो-र्व्याख्यानव्याख्येयभाव स्स्पष्टो न भवति" इति प्रत्यभिज्ञाया स्सत्वोपपादनात्, सूक्ष्मदृष्टयेत्युक्तिमात्रेण ब्राह्मणत्वानपायात् । यच्च वृत्त्यादिमते प्राकरिणिक-एवचे तिसूत्रयितव्यमिति ; तदप्यसाधु । "भाष्येपि महाप्रकरणोपन्यास-स्सूत्रार्थः टीकाकृता" इति कल्पतरुं "भाष्ये सौत्रमन्त्रपदार्थतया— महाप्रकरणं—मन्त्रपदस्य स्वार्थपच्यावनं भाष्यपक्षेपि तुल्य"मिति परिमलं-चावलम्ब्य खल्वेवं वल्गसि । सोयमुपरिपरिमलानवलोकननिबन्धनो भ्रमः, यत स्तत्र "वस्तुतस्तु भाष्यकारपक्षे मन्त्रपदं न प्रकरणपरम्—तत्प्रौढिः प्रदर्शिता" इतिग्रन्थे प्राथमिककल्पतरुवाक्यं समीचीनयुक्तिं चावलम्ब्य सौत्रमन्त्रपदस्य यथाश्रुतार्थकत्वे दोषलेशाभावोपपादनपूर्वकं वृत्तिकाराश्रितः पन्था एव निर्मत्सरमवलम्बितः । अनेन हि ग्रन्थेन सत्यंज्ञान मितिमन्त्रस्य अन्योन्तरआत्मानन्दमय इतिब्राह्मणस्य च व्याख्येयव्याख्यानभावः, सूत्रस्य यथासन्निवेश एवास्वारस्यलेशाभावः, वाचस्पत्युक्तेः प्रौढिवादत्वमन्यच्चा-स्मदभिमतं सुस्पष्टंदर्शितम् । नचेदंग्रन्थकारस्यानभिमतम्, उपर्यदूषणात् । अपिच प्राकरणिकएवचे तिनिवेशे नेतरइत्यादिसूत्रवैयर्थ्यं स्या दिति नैवं सूत्रणमापाद्यम् । यच्च नपुंसकलिङ्गबलेनार्थवादवाक्यं स्मार्यत इत्यादि, तत्स्तुत्यर्थकत्वनिरासावसर एव भामतीविरोधोद्घाटनेन निरस्तम् । किंच मान्त्रवर्णिकमेवासन्नित्यादिनास्तूयत इति कल्पनेपि न हानिः, अस्मन्मते तस्यानन्दमयविषयत्वेन विवक्षितार्थे पर्यवसानात् । मान्त्रवर्णिकमेव

ब्रह्मपुच्छमित्यत्र स्वप्रधानतया निर्दिश्यते असन्निति स्तूयमानत्वा दित्यर्थस्तु न संभवति । सूत्रे मान्त्रवर्णिकस्य गानकर्मत्वे स्वरसतः प्रतीयमाने प्राधान्येन-प्रतिपाद्यत इति पदद्वयाध्याहारेणार्थवर्णनस्याऽनादरणीयत्वा दित्यलम् ।

यदप्यानन्दमयस्य विपश्चित्त्वोपपत्तेः पूर्वमकथना दित्यादि ; तन्न, परपक्षे कस्यचिदाकारस्या नुपपत्तिकथनेनैव स्वपक्षे तदुपपत्ते स्सूचिततया नियमेन पूर्व कण्ठोक्त्यनपेक्षणात् । नहि त्वत्कूटस्थभाष्यरीत्या प्येषनियम उपलभ्यते, शरीराद्युत्पत्तिप्राक्कालिकाभिध्यानसृज्यमानविकाराव्यतिरेकसर्वाकार-सृष्टीनां परस्मिन्नुपपन्नतायाः पूर्वमस्थापनेपि जीवे तदनुपपत्ते र्भाषितत्वात् । एवं नियमाङ्गीकारे 'अङ्गित्वानुपपत्तेश्च, सर्वथानुपपत्तेश्च, संबन्धानुपपत्तेश्च, अधिष्ठानानुपपत्तेश्चे त्यादिकमसंगतमेव स्यात् । तत्र सर्वत्र पूर्वं स्वपक्ष उपपत्त्यकथनात् । तुल्यन्यायेन स्वपक्ष उपपत्त्यभिधायिसूत्रकरणस्थले सर्वत्र परपक्षे तदनुपपत्तिकथनस्यावश्यकत्वप्रसंगाच्च । तस्मात्परपक्षे कस्यचिद्धर्म-स्यानुपपत्तिकथने स्वपक्षे स प्रसिद्धश्चे दुपपत्ति स्सुबोधे तिकण्ठतो न कथ्यते, अप्रसिद्धश्चे दभावादेव न कथ्यत इति न कस्यचि च्चोद्यस्या वकाशः । यत्तु प्रक्रमभेद इति, तत्सूत्रकारशैलीपरिज्ञानाभावनिबन्धनम् । स ह्यत्रानन्दमयजीवत्वरूपप्रधानपूर्वपक्षनिरासकसूत्रेषु चशब्दं प्रयुङ्क्ते । नपुनः पूर्वशेषत्वेन विवक्षिते मध्योत्पन्नशंकाविशेषनिवर्तनार्थे सूत्रे यथा विकारशब्दादितिसूत्रे । नहीदमभ्यासवदानन्दमयस्य जीवत्वनिरासपरम्, अपितु पूर्वसूत्रार्थोपरिप्राप्ताक्षेपपरिहारपर मित्यवोचाम । इत्थंच नेतर इत्यत्र चकारादर्शनेन पूर्वशेषत्वमेवास्योचितमित्यस्मदाचार्यै स्त्वदुक्तरीत्या विपश्चिद-पश्चिमै स्तथाव्याख्यात मिति स्वतन्त्रशेषभूतयोर्विषये प्रक्रमभेदवर्णनं वर्णयितु र्विभ्रमभेदमेवावेदयति । जीवत्वस्येव विपश्चित्त्वस्यापि निर्विशेषे संभवा

दित्यपि न युक्तम् । निर्विशेषे शुद्धब्रह्मणि जीवत्वस्य केनाप्यनुक्तेः । अत्र विविधंपश्यच्चित्त्वं हि विपश्चित्त्वम् । अतः पूर्वपक्षिरीत्या शुद्धस्वरूपस्य निर्विशेषत्वा न्मान्त्रवर्णिकमधिकृत्यश्रुतानां शुद्धावस्थायां वर्तमानस्य सर्वज्ञत्वरूपविपश्चित्त्वस्य जगत्कारणत्वान्यानन्दहेतुत्वभयाभयकारणत्वादीनां तस्मिन्नसंभवेन मान्त्रवर्णिकं सविशेषपरमात्मरूप मेवाङ्गीकार्यम् । सिद्धान्ति- रीत्या मुक्तस्य सविशेषत्वेपि तस्य कारणत्वाद्यनभ्युपगमा त्तत्त्वासंभवएवे तिसूत्राशयः । इत्थंच परिशुद्धदशायामेव जीवत्वं केनोक्तं दृष्टान्ती- कृतमायुष्मता ?

यत्तु वृत्तिमते फलत्वव्यपदेशाच्चे तिसूत्रणीय मिति ; तदपि प्रामादिकम् । भेदपदं कृच्छ्रेण फलत्वेन भेदपरं व्याचक्षाणस्य तवैव मते ह्येत दापादनीयम् । एवंचात्रानुपपत्तिवर्णने यथासन्निवेशे तव कथं सामञ्जस्य मिति त्वयैव विचार्यम् , येन यथासन्निवेशे वृत्त्यानुगुण्यासंभव स्संतर्जनासंभव श्चोच्येत । अपिचावयवित्वेनप्रधानभूतस्यानन्दमयस्य सोकामयत, रसोवैस इति प्रकृतस्य रसंह्येवेतिरसपदेनग्रहणा ल्लब्धव्यएवानन्दमयो न लब्धे तिकर्तृकर्मभेदेनानन्दमयस्य जीवातिरिक्तत्वोक्तौ किन्नाम वृत्तिमतेऽनुपपन्न- मस्ति ? यदप्युक्तत्वाच्चेतिसूत्रणीयमिति तत्रोच्यते । उक्तत्वादितिकल्पितस्य, आनन्दमयो •जीवाद्भिन्नः भेदस्योक्तत्वात् इत्यर्थाङ्गीकारे प्रयोगासामञ्जस्यम् । श्रुत्याभेदस्योक्तत्वादित्यर्थाङ्गीकारे शब्दभेदमात्रमेवस्या न्नार्थे वैषम्यम् । इतःपूर्वं केनापिसूत्रेणानन्दमयस्य जीवाद्भेदस्यान्यादिशब्दशब्दितस्य ब्रह्म- त्वेहेतूकरणादर्शना त्तथासूत्रणायोगश्च ।

यदप्यन्स्ततेस्सूत्रद्वयं साङ्ख्यनिरासक मिति तदपि न । पूर्वाधिकरणएव तस्य सम्यङ्निरस्तत्वेन पुनरुन्मेषकल्पनाऽयोगात् ।

पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिमाश्रित्येतिशाङ्करं तु न युक्तिमत् । तथासति नेतर इत्यस्यानन्तरमेवैतत्प्रणयनप्रसंगात्, नेतरावनुपपत्ते रिति वाऽन्यथावैकास्मिन्नेवसूत्रेक्रोडीकारेण तस्यप्रणेयत्वापाताच्च । नचार्थ-विशेषानुरोधेन भेदव्यपदेशाच्चेत्यस्य तदानन्तर्यम्; तस्यापि नेतरइत्य-स्मात्पूर्वमेवविन्यासोपपत्तेः । नच विषयवाक्यक्रमानुसारा त्तदसंभव इतिशङ्क्यम्; भेदव्यपदेशा दित्यस्यान्योन्तरआत्मेत्येतद्विषयकताया एव स्वरसतया तत्क्रमभङ्गस्याप्रसक्तत्वात् । किंच त्वत्पक्षे कामादित्यस्य ईक्षतेरित्यनेन पौनरुक्त्यं दुर्वारम् । चशब्दास्वारस्यं च; तस्यात्रसाध्यैक्येसति साधनान्तरसमुच्चय एव स्वारस्यात् । श्रीभाष्यार्थदूषणमपि न साधु; कामशब्दस्य संकल्पपरताया आनुमानपदस्य ऽनुमानपदस्य वा व्युत्पत्ति-वशेनानुमानिकपदस्येव प्रधानपरतायाश्च सिद्धत्वेन तादृशव्याख्यानस्य क्लिष्टत्वकथनानुपपत्तेः । अपेक्षापदानुरोधाच्च तथा । त्वत्पक्षे पदास्वारस्य-वैयर्थ्यादिकं प्रागेवोक्तम् । प्रकृतेरित्याद्युक्तिश्च दुरुक्तिः; विरोधगन्धाभावात् । नामरूपविभागशून्यचिदचिद्विशिष्टं ब्रह्मोपादानम्, तद्वच्चिदचिद्विशिष्ट-ब्रह्मोपादेयम् । तच्च ब्रह्म न चतुर्मुखकुलालादिव च्छरीरेन्द्रियावस्थप्रकृति-विशिष्टंस त्स्थूलंजगत्सृजति; अपितु संकल्पमात्रेण स्वात्मानं सूक्ष्मविशिष्टं स्थूलविशिष्टं परिणमयती त्यस्मन्मतम् । सूत्रे च जीवभिन्नत्वे शरीरेन्द्रियादि-निरपेक्षं संकल्पमात्रेणस्रष्टृत्वं हेतूक्रियते । इत्थंच कोनामांश स्वाभ्युपगम-विरुद्ध इति परमतमर्मवेदनचतुरेण निगद्यते त्वया? यच्च तदुभयविशिष्टत्वमेव स्रष्टृत्व मिति, नायमस्मस्मतानुवादः । सृष्टृत्वं हि निमित्तत्वरूपम्, मृत्तिका घटं सृजती तिप्रयोगाभावेन तस्योपादानत्वरूपत्वानभ्युपगमात् । इत्थंच प्रकृते परस्य स्रष्टृत्वं स्थूलजगद्रूपेण बहुभवनसंकल्पाश्रयत्व मेवेति तस्य

तदुभयविशिष्टत्वरूपत्वानुवादोऽसंगत एवेति। तस्योपादानरूपत्वाभ्युपगमेपि न त्वदीयवाक्यसामञ्जस्यसंभवः, तस्य सूक्ष्मप्रपञ्चविशिष्टरूपत्वाभ्युगमात्, अत्र तु तदुभयेत्यनेन स्थूलस्यैव परामर्शात्। तेन प्रपञ्चमात्रपरामर्शाभ्युपगमेपि तद्विशिष्टतायाः कार्यावस्थासाधारण्या स्रष्टृत्वरूपतानुपपत्तिरेव। त्वदनूदितं विशिष्टत्वं तु कार्यत्वरूपं भवितुमर्हति न स्रष्टृत्वरूप मिति। यत्तु लौकिको युद्धन्यायः परित्यज्यत इति दुःख्यसि तत्र वक्तव्यं प्रागेवोक्तम्। यदपि न क्वापि वेदे नुमानपदबोध्यत्वं प्रधानस्य दृश्यत इति; किं तेन? वेदे प्रधानेनुमानपदप्रयोगोस्ती तिकेनाप्यनुक्तेः। सूत्रस्थानुमानपदं, आनुमानिकमप्येकेषामित्यत्रैव व्युत्पत्तिविशेषेण प्रधानपर्यायं संभवती तिस्फोरणाया-ऽऽनुमानिकप्रधानादिपदाभिधेयेतिभाषितं श्रीमति भाष्ये। विलक्षणव्युत्पत्तिना त्वयातु तदर्थ एवं गृहीत इति।

अ—स्ति। यदुक्तं रसोवैसः। रसंह्येवायं मितिवाक्ये शासनादर्शना द्व्याख्यानमयुक्त मिति; तन्न; यत्किञ्चिदर्थबोधनंशासन मिति यद्वा यत्किञ्चिदर्थाज्ञातज्ञापनरूपविधानंशासन मिति यद्यवधारयसि तर्हि तदक्षत-मस्मिन्नपिवाक्ये। यद्यन्यादृशंविधानंशासन मिति मनुषे, त्वदुपात्तवाक्यमपि न शास्ति। यदि तत्र तत्कल्पनमभिप्रैषि तर्हि सा दृष्टि रत्रापि दीयताम्। यस्माद्रसंलब्ध्वाऽऽनन्दीभवति तस्माल्लाभोपायमनुतिष्ठे दिति। किंचात्रा-वश्यंविन्देतेतिशास्तीति त्वदीयं वाक्यं कूटस्थभाष्यविरुद्धम् "तद्योगं तद्भावापत्तिरूपां मुक्तिं शास्ती"त्येव भाषणात्। अत्र मुक्तिरूपफलस्य विधानरूपशासनाऽसंभवा दर्थबोधनमेव शासन मभिमत मिति वक्तव्यम्। प्रतिष्ठां विन्देते तितदुपायविधिपरत्वमपि त्वन्मते न संगच्छते; मुक्त्युपाय-स्योपासनादिविलक्षणस्यवाक्यार्थज्ञानात्मकस्याविधेयत्वस्यैवाङ्गीकारात्। अतस्ते

सर्वथा न विधिपरत्वम् । तद्योगमित्यस्य तं तन्निष्ठस्येत्युक्तं योग मित्यर्थाङ्गीकारे अस्मिन्नस्येतिपदद्वयं व्यर्थम् । एवमस्यसूत्रस्यसांख्यनिरासकत्वे ऽस्येत्यनेनाचेतनमेवोपस्थितं ग्राह्यं स्या दित्यनन्वितार्थता । तन्निष्ठस्येत्यने-नैवगतार्थतेति युक्त्यन्तराभावात्सूत्रवैयर्थ्यञ्च । यदपि "कोहिनामैतदेवं व्याकुर्यादि"ति ; तत्र तत्तत्सूत्राक्षरस्वारस्यपर्यालोचनेन वास्तवार्थवक्तृत्वेन भवदीयैरभिमन्यमानो दीक्षित एव न्यायरक्षामणा वेवंव्याकरोती तिब्रूमः । तत्रह्यस्यसूत्रस्य रसोवैस इतिशास्त्रं निर्वृतोभवतीत्यमुमर्थशास्ती त्येव व्याख्यानं कृतम् । अतोत्रास्मन्मतदूषणं स्वमताज्ञानमूल माग्रहकृत्य मेवेति । यदपि "सोपिकिमर्थमेवंव्याकुर्यादि" ति तत्र "असति भगवत्पादीये भाष्ये" इत्येवोत्तरम् । शाङ्करभाष्यस्यासत्त्वादसमीचीनत्वा द्वास्तवार्थ-व्युत्पादनाय व्याकुर्या दिति । तस्यासमीचीनत्वादेव हि तद्विषयवाक्यं दीक्षित एवोपैक्षिष्टेति ।

यत्पुन रीक्षितृसत्पदाभिधेयमात्माब्रह्मेतिसाधिते जीवादन्यत्व मर्था-त्सिध्यतीति न तदर्थमानन्दमयाधिकरण मिति ; तन्न, ईक्षितृत्वात्मत्वादे र्जीवसाधारणत्वेन तदन्यत्वासाधकत्वात् । यच्च सृष्टिमेवानभ्युपगच्छन्तं प्रति जडादेवसृष्टिमभ्युपगच्छन्तं च प्रति जीवादन्यत्वं प्रधानविलक्षणजगत्कारण-साधनेनैव सिद्ध मिति ; तदपि न, एवमपि सृष्टिमभ्युपगम्य लाघवा त्क्लृप्त एव चेतने श्रुति योजयतः कस्यचिदन्यस्य मते जीवान्यत्वस्यासिद्धतया तस्य निरूपणीयत्वात् । ननु जन्माद्यधिकरणेनैव जीवस्य कारणत्वं निराकृत मिति चेन्न । तत्र भाष्ये, "न यथोक्तविशेषणस्य जगतो यथोक्तविशेषण-मीश्वरंमुक्त्वा ऽन्यतः प्रधानादचेतनात्—संसारिणोवोत्पत्त्यादि संभावयितुं शक्य"मित्युक्तत्वेन प्रधानवादस्यापि निरासावगमेनेक्षत्यधिकरणस्याप्यनुत्थितेः ।

ननु युक्त्या निरासे कृतेपि श्रुत्यापि निरासेनोक्तार्थप्रतिष्ठापनार्थ मधिकरण मितिचेत् तर्हि तद्वदेव जीवनिरासायानन्दमयाधिकरण मिति पश्य । एवमर्थसिद्धत्वकथनंच मूलविरुद्धम् : श्रुतत्वाच्चेतिसूत्रे "स कारणं करणाधिपाधिपो नचास्यकश्चिज्जनिता नचाधिप" इति श्वेताश्वतरवाक्य मुदाहृत्य "तस्मात् नाचेतनंप्रधान मन्यद्वे"तिभाषणात् । अचेतनमात्र-विलक्षणकारणत्वसाधनतात्पर्यकत्वे ऽचेतनव्यावृत्तचेतनसामान्यकारणत्वपर-श्रुतिविषयकपूर्वसूत्रेणैवेष्टसिद्ध्या ऽस्य वैयर्थ्यापत्तेः । अतः पृथक्सूत्रप्रणयनं जीवव्यावृत्तिबोधनाये तिभाष्यकृदाशय उन्नीयत इति तत्रान्यद्वेत्यस्य जीवरूपं वस्तु वेत्यर्थो बोध्यः । अतएव न्यायरक्षामणौ तत्सूत्रं तथैव व्याख्यायावसाने "तेनजन्मादिसूत्रे—जीवकारणत्वशङ्का श्रुतितोपि निरस्ता-भवति—जीवकारणत्ववादनिरास" इत्युक्तम् । अनन्तरमानन्दमयाधिकरणाधि-ष्ठिकायामपि "एवं जडजीवविलक्षणस्ये" त्याद्यभिहितम् । तस्मा ज्जीव-व्यावृत्तेरार्थिकत्वकथनं भाष्यादिविरुद्धम् । ननु तर्हि तेन सूत्रेण तत्सिद्ध मिति ब्रूम इति चेदुच्यते । मूलग्रन्थविरुद्धमित्येतावत् प्रागुक्तम् अत्रपुन-र्विकल्प्यते, किमिदं सूत्रं जीवकारणवादनिरासार्थमेव प्रवृत्तम्, उतान्यार्थमेव-प्रवृत्तम्, तेनैतदपिसिद्ध्यती ति । नाद्यः, तथासति, मानाभावात्प्रधानं-कारणमिति, चेतनंतुजीवाख्यंस्या दित्यवतार्य व्याख्येयत्वप्रसंगात् विचार्यस्य विषयस्य च भिन्नत्वेन पृथगधिकरणत्वापाताच्च । नान्त्यः, अर्थतस्सिद्धावपि यथा सर्वज्ञत्वसर्वशक्तित्वादीनामन्यथानयनेनेक्षत्यधिकरणप्रवृत्तिः, तथा तदपेक्षया चेतने तन्नयनस्य सुकरत्वात्, तुल्यन्यायेन करणाधिपाधिपत्वस्यापि नयनसंभवात् आत्मत्वाद्यबाधात् नचास्यकश्चिज्जनितेत्यादेर्नित्येतस्मिन्नुपपन्न-त्वात् लाघवबलात् तत्त्वमसीत्यादिवाक्यानुरोधात् आनन्दवल्लीरूपोपनिषदन्तरे

आनन्दमयस्य जीवत्वे भवतामिवस्वारस्यभ्रान्त्या च जीवकारणत्वशङ्काया स्सुवचत्वेन तत्स्वारस्यभ्रान्त्यादिनिराकरणेन जीवातिरिक्तत्वप्रतिष्ठापनार्थमपि पृथगधिकरणप्रवृत्ति रितिवक्तुं युक्तत्वात् । नच, जन्माद्यधिकरणे जीवस्यैव निरासो न प्रधानस्ये त्यत्र तथापि युक्तितएवतन्निरासोनश्रुतितइत्यत्र च सूत्रे किंचिद्गमकमस्ति । तत्रापि तु श्रुत्यर्थस्यैव विचारणात् श्रुतिबलावगत-विलक्षणकारणमहिम्नैव व्यावृत्ति र्वक्तव्येतीक्षत्यधिकरणप्रवृत्तिवदेवानन्द-मयाधिकरणप्रवृत्तिः । एवं श्रुतत्वाच्चेत्यस्य शाङ्करव्याख्यैवानुपपन्ना; तस्यार्थस्य गतिसामान्यसूत्रेणैव ग्रहणात् । सद्विद्याविचारार्थेधिकरणे विनागमकं उपनिषदन्तरवाक्यस्य विषयतया निर्देशायोगाच्च । गतिसामान्यसूत्रे तु सौत्रपदमेव वाक्यान्तराणि दर्शयती ति गमकमस्ति । नच सत्य प्युपनिदन्तर-स्वारस्यमत्या वस्तुवैलक्षण्येन चाधिकाक्षेपे ऽधिकरणान्तर मयुक्त मिति वक्तुं युक्तम्; तथासति समन्वयाधिकरणान्तेनैव शास्त्रस्य समापनीयत्वप्रसंगात् । अतोऽचेतनेजगत्कारणत्वशङ्कया यदि किंचिद्वक्तव्यमस्ति, तर्हि सुतरां ततोपि प्रधानभूते चेतन इति विमृश्यताम् ।

यदपि पूर्वत्रयोपि विज्ञानमयस्य गौणात्मान इति न वक्तुं शक्यमिति तदत्यन्तानुपपन्नम्; विज्ञानमयस्यान्नमयप्राणमयमनोमयशब्दितानि शरीर-प्राणमनांसि भोगोपकरणतया संबन्धीनि, स्वयंतु तदुपकरणोभोक्ता, आनन्दमयस्तु सर्वान्तर आत्मन आकाश इति निर्दिष्ट स्तस्याप्यात्मा । यथा लोके सूक्ष्मामरुन्धतींजिज्ञासमानाय प्रथमं स्थूलानि तारान्तराणि प्रदर्शयन्ति इयमरुन्धतीयमरुन्धतीति, एवमिह परमात्मानं जिज्ञासमानाय श्रुतिः प्रथमं शरीरादिकं प्रदर्शयति अयंपरमात्माऽयंपरमात्मेति । अन्ततो रुन्धतीमिव वस्तुतःपरमात्मान मितिकोशपञ्चकनिष्कृष्टार्थे स्वरससिद्धे किमत्रबाधकमुच्यत

इति। एकस्यानेकात्माभावा दितिकथन मुपहास्यम्। एकस्यानेकगौणात्मसद्भावे बाधकाभावात्। गौणात्मेत्यस्य वस्तुतोनात्मे तिखल्वर्थः। यदपि लक्षणाभीरुवृत्तिकारव्युत्पादनाय भाष्यभामत्यादिकं, नास्वारस्याभिप्राया दिति तदुन्मत्तप्रलपितम्। भाष्ये सूत्राणित्विति तुशब्देन, कल्पतरौ अध्याहारादिभिर्नेयानीत्यनेन, परिमले श्रुतिविरोधभ्रान्तिकरसूत्रप्रणयनंकृत मितिवाक्येन च वृत्तिकाराभिमतार्थ एव सूत्रानुगुण्यस्य स्वाभिमतार्थे तदभावस्य च सुस्पष्टं प्रकटितत्वेनात्रैवमुक्ते र्वञ्चनमात्रत्वात्। अपिचास्तिकस्य पापभीरुं प्रति पापानुष्ठानव्युत्पादकत्वव द्भाष्यकारादीनां लक्षणाभीरुं प्रति लक्षणाश्रयणव्युत्पादकत्वम्। शक्यार्थसामीचीन्यस्य स्थापितत्वात्। लक्षणा च जघन्या। अतएव गुणेत्वन्याय्यकल्पनेत्यन्याय्यपदेनतदुक्तिः। त्वयापि च न शक्त्या सूत्राणां त्वन्मत आञ्जस्यं संपादितम्, किंतु लक्षणया। एवं कुसृष्टयैव सूत्राणि योजयन्नेव "पुच्छवादानुगुणानिसूत्राणी" ति विरुद्धं वदसि। आनुगुण्यं हि स्वरसार्थकल्पने स्यात् न कुसृष्टिकल्पनेपि। यदपि श्रुतिरपि लक्षणयैव शुद्धं ब्रह्म बोधयती तिसूचनायानन्दमयपदप्रयोग इति, तदपि तुच्छम्; शुद्धाशुद्धभेदस्य त्वत्कल्पितस्य ब्रह्मण्यप्रामाणिकत्वात्। तथासति प्रथमतएव तत्सूचनस्य युक्ततया ब्रह्मजिज्ञासेतिब्रह्मशब्दप्रयोगायोगात्। ब्रह्मादिशब्दानां तवमते कस्मिंश्चिदर्थे शक्तेरेवाभावे शक्यसंबन्धरूपलक्षणाया स्सुतरामसंभवा त्प्रथमसूत्रस्थस्य लाक्षणिकताया दुस्संपादत्वात्, जातिगुणक्रियासंज्ञाप्रवृत्तिनिमित्तकतया शब्दचातुर्विध्यस्य तदनन्तर्गतशब्दाभावस्य ब्रह्मपरमात्मादिशब्दानां तेष्वन्यतमत्वस्य च पूर्वाचार्यै श्श्रीमच्छतदूषण्यादौ सुष्ठुनिरूपितत्वेन ब्रह्मादिशब्दानां तदन्यतमप्रवृत्तिनिमित्तभूतकिंचिद्विशेषविशिष्टवस्तुवाचित्वे चान्वयानुपपत्त्याद्यभावेन लाक्षणिकत्वकल्पनस्यानवकाशात्। ब्रह्मजिज्ञासा,

मान्त्रवर्णिकमेव, आकाशस्तल्लिङ्गात्, प्राणः, ज्योतिः इत्यादिषु परमात्मशक्त-ब्रह्मादिपदप्रयोगेण सूत्रकारस्य श्रुति श्शक्त्यैव सविशेषं परमप्राप्यं ब्रह्म बोधयती त्याशयवत्त्वस्यैवोन्नयनौचित्याच्च । यदपि यदि कश्चि दानन्दमयो-ब्रह्मेति ब्रूया त्तदा तत्पक्षेपि प्रियशिरस्त्वाद्यप्राप्ति रितिबोधनाय सूत्रभाष्ये इति ; तदपि न, उक्तरीत्या नन्दमयब्रह्मत्वस्य निर्बाधत्वेन तत्संबन्धिनां प्रियशिरस्त्वादीनां विद्यासु प्राप्तिशंकासमाधानयोरावश्यकतया स्वरसार्थस्यैव ग्राह्यत्वेनैतादृशकुसृष्टेर्निर्मूलत्वात् । कृत्वाचिन्तेयमितिभाष्यस्ये त्वदनुकूलत्वेन तद्विषये कथमितित्वदीयशङ्कावाक्यञ्चार्थरहितम् । यदपि सूत्रत्रयं पूर्वपक्षपर मित्यादि ; तदपि न, भाष्यादिविरुद्धत्वात्, पूर्वपक्षोपात्तहेतूनां क्रमेण सिद्धान्ते निरसनीयतया तददर्शनेन तथाकल्पनाऽयोगाच्च । नह्यभ्यासतद्धेतुव्यपदेशौ क्रमेण निरस्येते । अन्यत्रपराधिकरणादौ तथैव दर्शना दिति ।

किञ्चेदमधिकरणं परेषा मुष्ट्रपृष्ठ मिव भवति । तथाहि प्रथमत स्सूत्रचतुष्टयं पुच्छब्रह्मणस्स्वप्राधान्यसाधकम् । सूत्रयोजनाभेदोपि तत्रतत्र विलक्षणः । पञ्चमषष्ठे जीवस्यपुच्छत्वनिरासार्थे इति कश्चित् । आनन्दमयस्य विवक्षितत्वनिरासाये त्यन्यः । एवमनुपपत्तिशब्दार्थे भेदव्यपदेशशब्दार्थे तत्रविषयवाक्यंकिमित्यत्रापि कलहः । सप्तमं पुच्छस्यसाङ्ख्यप्रधानतानिरासार्थ मानन्दमयप्राधान्यानुमाननिरासार्थं वा । कामशब्दार्थोपि यथारुच्यन्यः । तथाष्टमं जीवत्वप्रधानत्वोभयनिरासार्थं मानन्दमयपरामर्शस्य ब्रह्मप्रतिपत्तिशेष-त्वस्थापनार्थं वा । तद्योगमित्यस्य च तदात्मना योग इति कश्चित् । तस्य योग इत्यपरः । तं योग मित्यन्यः । सर्वमिद मन्यच्चैवंभूत मिह सम्यगुपक्षिप्य सप्रपञ्चं प्रतिक्षिप्तम् । एव मव्यवस्थितविविधविपरीतघटनाविध्वंसितार्जव मत्यन्तविषम मिद ममीषां पक्ष इति । अस्माकं तु प्रथमसूत्रं चकारघटितानि

सूत्रान्तराणि चानन्दमयस्य ब्रह्मत्वसाधकानि । तदघटिते द्वितीयपञ्चमे तु तेनैव हेतुना स्वस्वपूर्वशेषभूते इति सर्वप्रकारेणाधिकरणंरमणीय मित्यलमतिचर्चया ।

अतः पूर्वोक्तैर्हेतुभि श्शङ्कराद्युपवर्णितानन्दमयाधिकरणार्थस्य दुस्स्थत्वा त्सद्भिरसावनादरणीय इति, सूत्रस्वारस्या दौपनिषदस्वरसार्थानुगुण्या दनुपपत्तिलेशाभावा च्छ्रुत्यन्तरानुगुण्या त्परमर्षिबोधायनवृत्त्यादिदत्तहस्तावलम्बनत्वाच्च श्रीमच्छ्रीभाष्यकारानुगृहीत एव सद्भि आत्मनः क्षेमाय तै रादरणीय इति च सिद्धम् ॥



इति

परपक्षनिराकृतौ

प्रथमः परिच्छेदः ॥

कृपया करिनाथस्य परपक्षनिराकृतौ ।
आदिमोऽयं परिच्छेद स्समाप्त स्तत्रचार्पितः ॥

श्रीमते वेदान्तरामानुजमहादेशिकाय नमः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

श्रीमते निगमान्तगुरवे नमः

भगवते भाष्यकाराय नमः

श्रीपद्मावतीसमेतश्रीनिवासपरब्रह्मणे नमः

श्रीः

---

दि माडल प्रस् पि. टि. मद्रास.